ॐ

# कीदृशं संस्कृतम् ?

लेखकः
श्री पं० आचार्यः श्याम कुमार " सिंहः "
साहित्यरत्नः, विद्याभूषणः
मन्त्री भारतीय-विद्या-प्रचार-समितिः
आगरा-नगरम्



विक्रम संवत् २००६; सन १९४९



मूल्यं सार्धरूप्यकः ।

मुद्रकः प्रकाशकश्च
व० श्री० सातवळेकर, बी. ए.
भारत मुद्रणालय आनन्दाश्रम
पारडी ( जि. सूरत )

प्रथम वार मुद्रित

प्राप्तिस्थानं
१ श्री पं. श्यामकुमार आचार्यः
भारतीय-विद्या-प्रचार समितिः
आगरा-नगरम्
२ स्वाध्याय-मण्डलः
आनन्दाश्रमः, पारडी जि. सूरत



डा० नारायण प्रसाद आस्थाना

श्रीमतां

डाक्टर नारायण प्रसाद आस्थाना

कुलपतीनां आगरा विश्वविद्यालयस्य, प्रधानानां
भारतीय-विद्या-प्रचार-समितेः

महोदयानां करकमले

# " कीदृशं संस्कृतम् "

नामकः ग्रन्थः

पञ्चसप्ततितमे जन्मदिवसे

भारतीय विद्या-प्रचार-समितेः पक्षात् सादरं समर्पितः ।

एषा समितिः कामयते यत् ते शतायुषः भूत्वा
देववाण्याः महतीं सेवां कुर्वन्तु इति

लेखकः तथा मन्त्री
भारतीय-विद्या-प्रचार-समितेः
आगरा-नगरम्.

# श्रीमतां डा० नारायण प्रसाद आस्थानानां

## जन्मवृत्तम् ।

२० अपरैल १८७४··· जन्मदिवसः ।

१८९३... आगराकालिजतः स्नातकः सञ्जातः ।

१८९५... आगरानगरे वाकीलवृत्तिः प्रारब्धा ।

१९०२–१९११... आगरा–मनुष्यपालिका–समितेः सदस्यः तथा उपसभापतिः अपि नियुक्तः ।

१९१५... प्रयाग-प्रधान-न्यायालये वाकीलवृत्तेः सम्पादनाय गतः ।

१९१६-१९२३... युक्तप्रान्तीय–लोक–प्रतिनिधि-सभायाः सदस्यः नियुक्तः ।

१९२७... भारत-राज्यस्य-केन्द्रिय-मन्त्रि-सभायाः सदस्यत्वं प्राप्तः ।

१९२८-१९३०... कुलपतिः आगरा-विश्वविद्यालयस्य अभूत् ।

१९३२... " डाक्टर ऑफ लॉज " ( L. L. D. ) इति उपाधिना अलंकृतः ।

१९३७-१९४५... युक्तप्रान्तस्य "एडवोकेट जनरल" स्थाने नियुक्तः ।

.......१९३७... सभापतिः " बारकौन्सिल " प्रयाग हायकोर्टस्य संजातः यस्मिन् पदे अद्यावधि तिष्ठति ।

१. १.-१९४६... "सी . आई . ई . इति उपाधिना अलंकृतः ।

दिसेंबर १९४६... कुलपतिः आगरा-विश्वविद्यालयस्य पुनः संभूतः ।

# शुभकामना-प्रदर्शनार्थं

एकः शब्दः ।

[ लेखकाः- परमोत्कर्षं गताः महाभागाः श्री माधव श्रीहरि अणे,
बिहार-प्रान्ताधिपाः तथा संरक्षकाः भारतीय-विद्या-प्रचार-समितेः ]

वयं श्री डा० नारायण प्रसाद आस्थाना महोदयान्, कुलपतीन् आगरा-विश्वविद्यालयस्य, तथा प्रधानान् भारतीय-विद्या-प्रचार-समितेः प्रति स्वीयाः हार्दिकीः शुभकामनाः प्रदेतुं इच्छामः, तेषां पञ्चसप्ततितमं जन्मदिवसं उपलक्ष्य, एवं एव वयं तान् महोदयान् विशेषतया देववाण्याः, तथा साधारणतया विद्यायाः सेवायै प्रशंसामः ।

अस्मिन् शुभावसरे एतेषां महोदयानां करकमले भारतीय-विद्या-प्रचार-समितेः पश्चात्, यस्याः ते प्रधानाः सन्ति, मानपत्रादिदानं, तथा "कीदृशं संस्कृतं" इति ग्रन्थस्य समर्पणं च उत्तमं कार्यं अस्ति, तस्य वयं हृदयेन समर्थनं कुर्मः ।

वयं विचारयामः यत् अयं "कीदृशं संस्कृतं" इति ग्रन्थः पाण्डित्यपूर्णः तथा देववाण्याः परमहितकरः मंस्यते देशस्य विद्वद्भिः, यस्य एतादृशैः महा-पण्डितैः श्रीमद्भिः आस्थानामहोदयैः, तथा वेदज्ञैः श्रीपाद-दामोदर-सातवलेकर शर्मभिः, तथा च डा० ईश्वरी प्रसाद ( एम्. ए. डी. लिट् )आदिभिः प्रशंसनं क्रियते ।

अयं "कीदृशं संस्कृतं" इति ग्रन्थः विद्वद्भिः सुप्रसिद्ध-लेखकैः आचार्यैः श्यामकुमार महोदयैः भारतीय विद्या-प्रचार-समितेः महामन्त्रिभिः निर्मितः ये सर्वतोभावेन देववाण्याः सेवायां दीर्घकालात् तल्लीनाः विद्यन्ते ।

अन्ते वयं भूयः कामयामहे डा० आस्थाना महोदयेभ्यः एतादृशस्य शुभजन्म-दिवसस्य पुनरावर्तनं, येन ते अमरभारत्याः देववाण्याः भारत-देशस्य च निरन्तरं सेवां कुर्वन्तु । भवतु एवम् ।

राज्यभवनं, पाटना
५।१०।४९

बिहारप्रान्ताधिपाः
माधव श्रीहरि अणे

## शुभ-कामना ।

( लेखकाः– परमोत्कर्षं प्राप्ताः महाभागाः डा० कैलासनाथ काटजू वङ्गप्रान्ताधिपाः, तथा उपप्रधानाः भारतीय विद्या-प्रचार-समितेः )

. " …… डा० नारायण प्रसाद आस्थानाः महोदयाः अस्माकं सुसंमानिताः महार्हाः सुहृद्वराः सन्ति । वयं तु तान् महोदयान् चत्वारिंशद्वर्षेभ्यः प्रशंसामः। एतेषां महोदयानां धवलं निर्मलं चारित्र्यं महनीयं पाण्डित्यं च युक्तप्रान्ते सुप्रसिद्धं विद्यते । वयं कामयामहे यत् ते दीर्घायुर्युक्ताः भवन्तु । एवं अस्तु ।

राज्य–भवनं

कालिकत्ता

२५।८।४९

कैलासनाथ काटजू

× × ×

## अभिमतं ।

श्रीमतां डाक्टर ईश्वरी प्रसाद एम्. ए. डी. लिट्. प्रयाग विश्वविद्यालयस्य अध्यक्षाणाम्

"…आचार्याः श्यामकुमार-महोदयाः देववाण्याः महाविद्वांसः शुभार्चिंतकाः च सन्ति । तेषां पुस्तकं " कीदृशं संस्कृतं " इति नामकं मया अवलोकितम् यत् असंशयं नवीनं विचारं प्रदर्शयति । तैः संस्कृतव्याकरणं सरलीकृतं, तथा एकः नूतनः मार्गः संस्कृत-पठन-पाठनस्य अन्वेषितः । तेषां संस्कृतं सरलं सुबोधं व्यावहारिकं च विद्यते । लेखनशैल्या इदं प्रतीयते यत् संस्कृतं सुगमतया जनभाषा भवितुं अर्हति भारते देशे इति ।

प्रयाग

४।७।४९

ईश्वरी प्रसाद

प्रयाग–विश्वविद्यालय.

## ग्रन्थस्य प्रस्तावना ।

( लिखिता पं० श्रीपादशर्मणा दामोदरसूनुना भट्ट सातवळेकरोपाह्वयेन, स्वाध्याय-मण्डलस्य अध्यक्षेण, पारडी-प्रांत सूरत-वास्तव्येन, भारतीय-विद्या-प्रचार-समितेः कार्यकारिणी-सभायाः सदस्येन )

" कीदृशं संस्कृतं " इति अयं सामयिकः ग्रन्थः श्रीमद्भिः श्यामकुमाराचार्यैः भारतीय-विद्या-प्रचार-समितेः मन्त्रिभिः निर्मितः गीर्वाण-भाषायाः सारल्याय काठिण्य-दूरीकरणाय सर्वत्र प्रसाराय च । अवलोक्य संपठ्य च इमं ग्रन्थं प्रमुदितं मे चेतः । प्रायः सर्वे अपि पण्डिताः ये संस्कृतभाषां भारत-राष्ट्रस्य राष्ट्रभाषां राजभाषां राज्यशासनभाषां जनभाषां च कर्तुं ईहन्ते, ते अस्याः देववाण्याः सारल्यं कामयन्ते एव । तदर्थं एव एतेषां अयं प्रयत्नः अस्ति । अतः एषः सर्वैः आदरणीयः मननपूर्वकं विचारणीयः अनुसर्तव्यः च ।

अत्र नास्ति इदं आवश्यकं, यत् सर्वे अपि विबुधाः तत् सर्वं समनुमन्येरन् यत् यत् प्रबन्धे अस्मिन् लेखकैः लिखितम् । अहं अपि न सर्वं तथा स्वीकरोमि, यथा अत्र एभिः प्रतिपादितम् । मम संमतिः तु प्रारम्भे एव ग्रन्थस्य अस्य प्रथमाध्याये आचतुर्थपृष्ठात् पष्ठपृष्ठपर्यन्तं मुद्रिता अस्ति । सा एव मम संमतिः अद्यापि तथैव तिष्ठति । भवतु नाम कश्चित् कस्मिंश्चित् मतभेदः । परं अस्मिन् संदेहस्थानं न विद्यते, यत् संस्कृतभाषा मा भवतु नाम केवलं अल्पीयसां विद्वद्वराणां सूरिप्रवराणां एव अन्यीया भाषा, परंतु सा भारतस्य जनभाषा शीघ्रं भवतु इति येषां मतं अस्ति, तेषां अर्थे एषः प्रबंधः समीचीनः विचारयोग्यः समादरणीयः च भवितुं अर्हति । अतः आचार्याः श्यामकुमाराः सर्वेषां अस्माकं प्रशंसां अर्हन्ति, यत् तैः एषः महत्त्वपूर्णः संस्कृत-सारल्याय समुद्यमः अनुष्ठितः ।

अस्यां दिशि गीर्वाण-भाषाभिमानिनां अपि किञ्चित् अवश्यं कर्तव्यं विद्यते एव । इदानीं तैः तथा अवश्यं अतिशीघ्रं एव प्रयतितव्यं, यथा अस्याः देव-भाषायाः लोपः न स्यात्, तस्याः प्रचारः च पूर्ववत् सार्वत्रिकः अतिशीघ्रं स्यात्, तथा च एषा व्यावहारिकी जनभाषा च अविलम्बेन भवेत् । -

लोपे सति संस्कृतभाषायाः भारतीयानां निखिलस्य ऋषिप्रणीतस्य मङ्गल-साहित्यस्य, सनातनधर्म-प्राणभूतानां वेदानां, भारतीयसंस्कृतेः च अपि असंशयं नाश एव भवेत्। एवं जाते सति महती विनष्टिः भाविष्यति, न केवलं भारतस्य अपि तु सर्वस्य जगतः एव। यतः विश्वस्य सुखशान्त्यर्थं भारतीय-साहित्यस्य सुष्ठुसंरक्षणं यथा स्यात् तथा अवश्यं कर्तव्यं एव, तदर्थं च गीर्वाण-भाषायाः सारल्यं साधनीयं, तस्याः सार्वत्रिकः प्रचारः च अवश्यं कर्तव्यः, एतदर्थं सर्वैः विद्वद्भिः अतिशीघ्रं प्रयतितव्यम्।

अहं मन्ये यत् संस्कृत-भाषा मध्यकालीनैः "पण्डितैः एव कठिनीकृता, अत एव तैः एव तस्याः सरलीकरणार्थं अवश्यं प्रायश्चित्तं विधेयं" इति। विहाय इमं पन्थानं, न विद्यते अन्यः कः अपि उपायः येन देव-भाषायाः अस्याः शीघ्रं समुन्नतिः स्यात्।

सर्वेषां मध्यकालीनानां संस्कृतस्य काठिन्यं विवर्धिषूणां, काठिण्यमेव पाण्डित्यमिति मन्यमानानां पाण्डितब्रुवाणां पापक्षालनार्थं एतत् महत् प्रायश्चित्तं एव श्यामकुमाराचार्यैः कृतं इति अहं मन्ये। अतः ते सर्वेषां अस्माकं संस्कृतस्य समुन्नत्यर्थं यतमानानां हार्दिकीं प्रशंसां अर्हन्ति, यतः तैः निष्कंटकीकृतः संस्कृतभाषायाः मार्गः।

एतेषां अयं प्रस्तावः शोभनः एव वर्तते यत् सर्वेषां विदुषां एका परिषद् सम्यक्तया आयोजयितव्या, तस्यां अस्य विषयस्य सर्वाणि विबुधानां मतानि संकलय्य विचारः कर्तव्यः। तस्य यः परिणामः भवेत् सः सर्वैः अनुसर्तव्य इति। 'भारतीय विद्या-प्रचार-समितिः' एतस्याः सभायाः सम्यक् आयोजनाय अस्ति एव सन्नद्धा।

शुभे अस्मिन् समये कामये अहं, यत् मङ्गलमयस्य विश्वरूपस्य परमात्मनः कृपया डा. नारायण प्रसाद अस्थानामहोदयानां, भारतीय विद्या-प्रचार-समितेः प्रधानानां सर्वानन्दमयं दीर्घजीवनं भवतु तथा च अस्य ग्रन्थस्य उद्दिष्ट-साफल्यं च भवतु इति।

स्वाध्याय-मण्डल. पं॰ श्रीपाद दामोदरभट्ट सातवलेकरः.
पारडी २५।१०।४९

## विषय-सूची ।

| विषयः | पृष्ठसंख्या |
|---|---|

| विषयः | पृष्ठसंख्या |
|---|---|





ॐ

# कीदृशं संस्कृतम् ?

## अध्यायः १

### " विदुषां मतानि "

प्रायः सर्वे जनाः कथयन्ति, यत्संस्कृतं प्रचलितरूपे अत्यन्तं कठिनं विद्यते। अतएव तत्कदापि राष्ट्रभाषा, भाषण-भाषा, अन्ताराष्ट्रीय भाषा च भवितुं न अर्हति पूर्ववत्। इदं सत्यं अस्ति। अस्याः काठिनतायाः कारणानि विविधानि सन्ति, परन्तु तेषु "नियमरूपेण वाक्ये सन्धिप्रयोगः" 'प्रधानकारणम्'। अतएव अस्मिन् पुस्तके सन्धिप्रयोगः न करिष्यते, परं अचि परे सति अपि मान्तस्य पदस्य अनुस्वारः करिष्यते, येन संस्कृते सारल्यं आगच्छेत्, सर्वे जनाः अबाधरूपेण संस्कृतं वक्तुं लेखितुं च शक्नुयुः, तथा शब्दाः स्वरूपे तिष्ठेयुः, विरूपतां न गृह्णीयुः। संस्कृतज्ञाः मन्यन्ते एव यत् सन्धिविषयः वैकल्पिकः-इच्छाधीनः, अतएव इच्छाधीनत्वात् तस्य प्रयोगः क्रियेत न वा। परं वस्तुतः 'असंहितावाक्ये' व्याकरणसम्मतः नियमः अस्ति। अस्मिन् पुस्तके इदं अपि सिद्धं करिष्यते, यत् संस्कृतं अत्यन्तं सरलं अस्ति। वाक्येषु सन्धिरहितं संस्कृतं अद्य एव राष्ट्रभाषा, जनताभाषा च भवितुं अर्हति पूर्ववत्। संस्कृते पूर्णतया सारल्यस्य आनयनाय अन्यानि संशोधनानि आवश्यकानि सन्ति। वय

तेषां विषये यथास्थानं निवेदयिष्यामः। दीर्घकालात् देशस्य विद्वद्भिः सह पत्रव्यवहारः कृतः अस्माभिः। तेषां पत्राणां अंशाः लेखाः वा अत्र दीयन्ते, येन इदं ज्ञानं भवेत् यत् तेषु विचारेषु कानि कानि संशोधनानि आवश्यकानि सन्ति, तथा तेषां कियती सम्मतिः अस्मद्विचारैः सह संगच्छते।

× × ×

(अ) सर्वप्रथमं वयं अत्र अयोध्यायाः 'संस्कृतम्' इति पत्रस्य एकां सम्पादकीय-टिप्पणीं दद्मः, या १।६।४६ तिथ्यां प्रकाशिता, संस्कृतप्राणेन श्री पं० कालीप्रसादशास्त्रिणा।

"लेखनं कीदृशम्?"

निस्सन्देहं संस्कृतभाषा समस्तं भारतवर्षं व्याप्नोति। सत्यमेव समस्ते देशे संस्कृतलेखकानां नाभावः। अवश्यं संस्कृतभाषायां भाषणकर्तॄणां प्राचुर्यं अस्ति इति तु सर्वैः स्वयमेव ज्ञातुं शक्यते। संस्कृते प्रकाशितान् लेखानधीत्य को विद्वान् तद्गतानर्थान् नाधिगच्छति। इत्थं वक्तुं शक्यते यद्भारतीय-विदुषां संस्कृतलेखनशैली प्रायः सर्वत्र समानैव, तथापि बहूनां विदुषामयं विचारपरिपाको यन्न्यूनातिन्यूनं संस्कृतपत्राणां या भाषा स्यात् सा ईदृशी स्यात् या लेखने भाषणे च समाना भवेत्। इदमवलोक्यतेऽपि यत्संस्कृतभाषणे येषां विदुषां शब्दा अतिस्फुटा भवन्ति तेषां लेखा न तादृशा, अतएव लेखनभाषणयोर्भाषा समाना स्यात्, एतदर्थं बहवः सन्धिं नेच्छन्ति, बहवश्च बहूनां लकाराणामपि वैयर्थ्यमङ्गीकुर्वन्ति। एतस्मिन् विषये मतद्वयं प्रकाश्यते। एकमस्ति सुप्रसिद्धवेदज्ञस्य, विविधग्रन्थपत्रसम्पादकस्य, महाभारताद्यनेकग्रन्थानुवादकस्य, पारडीस्थ-स्वाध्यायमण्डलाध्यक्षस्य श्री पं० श्रीपाद दामोदर सातवलेकरस्य, द्वितीयं च मतं आगरास्थाखिलभारतवर्षीय संस्कृतसाहित्यसम्मेलनमन्त्रिणस्तथा

ऽऽगरासंकृस्तविश्वविद्यालयस्थापकसमितिमन्त्रिणः श्री श्याम-कुमारसिंहस्य । तत्र प्रथमो वदति—

"पठन-सौकर्य्याय विच्छिन्नपदानां साहाय्यं सञ्जायते। समस्तैः पदैः सन्धिभूतैश्च काठिन्यं भवति। संहिताविवक्षामपेक्षते। परस्परं संस्कृते सम्भाषणकर्तारः यत्र यत्र संहितीकरणमावश्यकं यथा मन्यन्ते तथैव लेखनेऽप्युचितम्। यथा१६अब्दस्य २७ संख्यायां संस्कृतपत्रे—

"पुत्रस्तिब्बतं गतस्तत्रत्यैः सामन्तैर्नरपालत्वेनाङ्गीकृतः"। एतद्वाक्यमित्थं लेख्यम् – "पुत्रः तिब्बत गतः। तत्रत्यैः सामन्तैः नरपालत्वेन अङ्गीकृतः" इति। इत्थं संस्कृतभाषा जनपदभाषा भविष्यति, जनपदभाषात्वाय संस्कृतभाषया सरलया भवितव्यमिति।

द्वितीय मतमीदृशं वर्तते –"संस्कृतभाषा लौकिकीभाषा भवितुं समुद्यता अस्ति। लौकिकभाषायां यदि सन्धेः आवश्यकता एव भवेत् तर्हि सा स्फुटा स्यात्, भ्रान्त्या रहिता च। समासः अपि काठिनः न स्यात्। लौकिकभाषायां बहूनां धातूनां लकाराणां आवश्यकता नास्ति। द्विवचनस्य अपि आवश्यकता न प्रतीयते। यथा हिन्द्यां द्विवचनं न वर्तते, तथा संस्कृते अपि न भवेत् इति" भाषणसमयेऽवश्यमीदृशी भाषा कैश्चित्प्रयुज्यते, परं लेखने तु नास्मन्मते समीचीनेयं सरणिः। तथाऽप्यन्यैरपि विद्वद्भिरस्मिन् विषये विचारः करणीयः। सन्धि- शोभां वर्द्धयति लघुत्वञ्चापदयति। दशलकारैर्हार्दिकोऽपि संकेतो व्यज्यते। द्विवचनं यद्यन्यत्र नास्ति तर्हि संस्कृतशोभा किमर्थं भ्रष्टीकरणीया। हां! सरलसंस्कृतलेखनस्याहमपि पक्षपाती। अप्रचलिता धातवः शब्दाश्च नूनं पठतां मार्गे कण्टकायन्ते परं

गम्भीरलेखेषु कवितासु च हार्दव्यक्तीकरणाय तदावश्यकता-महमनुभवामि। अत्रान्यैरपि विद्वद्भिः स्वविचारो व्यक्तीकरणीयो यत्संस्कृतभाषा कीदृशी स्यात् ।

× × ×

(आ) संस्कृतप्राणः पं० कालीप्रसादशास्त्री, सम्पादकः, 'संस्कृतम्' इति समाचारपत्रस्य एकं पत्रम् ।

ता० ११-१२-४६. संस्कृत-कार्यालयः, अयोध्या

श्री पं० श्यामकुमारसिंहमहोदयाः

"…………सरल-संस्कृतस्याहमवश्यं पक्षपाती भाषणे, संस्कृतसमाचारपत्रादिषु विनोदपुस्तकेषु च, परं ग्रन्थानां भाषा यदि शास्त्रनियमाविरुद्धा भविष्यति, तर्हि तस्या अनादरः सम्भव एव। तत्तच्छास्त्राणां संकेताः पृथक पृथक् भवन्त्यत एव नैयायिकानां या भाषा न सा वेदान्तिनां मीमांसकानाञ्च ।

भाषणसमये सन्धौ नियमराहित्यं स्वत एव जायते, परं न तल्लेखनवस्तु। अस्माकं समस्तभारतस्य महाविदुषां पत्रम्। तत्र नियमरहित प्रकाशनमसम्भवम् ।" वाक्ये तु सा विवक्षामपेक्षते " इत्येव मन्ये ।

( इ ) सुप्रसिद्धवेदज्ञस्य, विविधग्रन्थपत्रसम्पादकस्य, महाभारताद्यनेकग्रन्थानुवादकस्य,पारडीस्थ-स्वाध्यायमण्डलाध्यक्षस्य श्री पं० श्रीपाद दामोदर सातवलेकरस्य पत्र स्वाध्यायमण्डलम् [ वैदिकतत्त्वज्ञानप्रचारकसंघः ] पारडीनगरम् ( जि. सुरत )

ता० २०। ६। १९४६

श्रीमन्त आचार्याः श्यामकुमारसिंहाः सादरं प्रणिपत्य निवेद्यन्ते। "……………यत् भवतां पत्रं योग्यसमय एव प्राप्तम्। अधिगतश्चाशयः । अहमपि संस्कृतभाषायां सारल्यं

कामये। यदस्मिन् पत्रे भवद्भिः लिखितं तत्सर्वं समीचीनम्। सन्धिस्तु केवलं विवक्षायामेव विद्यते, न स सर्वत्र आवश्यकः। सन्धिस्तु हिन्दीभाषायां आङ्ग्लभाषायामपि भवत्येव, यथा–'सदाचारसे मनमें पुनीतभाव होते हैं (लेखने), सदाचार्से मन्में पुनीतभाव्होते हैं' (उच्चारणे)। अत्र लेखने सन्धिर्न दृश्यते पर उच्चारणकाले स्पष्ट श्रूयते। तथैवाङ्ग्लभाषायां, यथा–

It is not the foolishness of the man

इटीज् नाट् दी फूलिश्नेसॉफ्दी मॅन् (एवमुच्चारणकाले सन्धिः सुस्पष्टं श्रूयते।) आङ्ग्लास्तु भाषाव्यवहारकाले सन्धीन् कुर्वन्ति। लेखने तु न। तथैव गीर्वाणवाण्यामपि भवतु।

भाषाया उद्देशोऽपि सुखबोध एव भवितु योग्य न दुर्बोधत्वम्। दुर्बोधत्वे इष्टे सति मूकत्वमेव वरं भवेत्।

संस्कृतभाषा हिन्दीभाषाया मराठीभाषायाश्च सरलतरा वर्तते। यथा हिन्द्या लिङ्गानुवर्त्तित्व वर्तते न तथा सुरभाषायाम्। यथा––

| | |
|---|---|
| स्त्री जाती है<br>पुत्र जाता है | अत्र क्रियारूपभेदो भवति। |
| ललना गच्छति<br>पुत्रो गच्छति | अत्र लिङ्गभेदे सत्यपि क्रियारूपभेदो न भवति। |

पण्डितैरेव संस्कृतभाषा कठिना कृता। तेन सर्वेषां जनानां संस्कृतविषये अरुचि सञ्जाता। अत पण्डितैरेव भाषाशुद्ध्यर्थं प्रायश्चित्त कर्तव्यम्। संहिताया विवक्षसम्मतत्वे स्वीकृते सन्धि ऐच्छिको भवति, स नैव काठिन्य उत्पादयिष्यति। यथा सदा सन्धिराहित्यमेव न अनुसर्तव्य तथैव सन्धियोगोऽपि सर्वदा नानुसन्धेय॰ विवक्षापक्षत्वात्। विवक्षापेक्षी नियम॰ सदैव

वैकल्पिको भवति।

(२) समासविषये पदच्छेदपूर्वकलेखनेन न काठिन्यं भविष्यति। यथा- " पर्वत-शिखर-स्थित-कुसुम-सञ्चयः " इति तु स्पष्टतरं भवति लेखनम्। अतः सर्वत्र समासे पदच्छेदपूर्वकं लेखनं कार्यम्। द्वित्रिपदयुक्ताः समासाः भवेयुः, तदधिकपदयुताः निषेद्धव्याः सारल्येच्छुभिः।

(३) पञ्च लकाराणामेव प्रयोगः कार्य्य इति तु यद्भवद्भिरुक्तं सत्साधु वर्तते। एवमेव कार्यम्। एतदर्थं संस्कृतपाठ्यपुस्तकानि निर्मातव्यानि।

(४) द्विवचनं यत्र कुत्राचित् आवश्यकं इति प्रतीयते। द्विवचनस्य अत्यन्तं बहिष्कारः सर्वथा समुच्चाटनं वा अशक्यप्रायं इति मन्ये। 'रामकृष्णौ आगच्छतः' इत्यत्र 'रामकृष्णा आगच्छन्ती' ति प्रयोगः सुतरां दुर्बोधकरः। अतः द्विवचनं ऐच्छिकं वैकल्पिकं वा भवतु प्रथमारम्भसमये। भाषासारल्याय भाषावैशिष्ट्यविनाशो माऽभूत्।

(५) द्विशताः त्रिशताः वा धातवः आवश्यकाः सन्ति, तेषां प्रथमं निश्चयः कार्यः। तेषां पञ्चलकाराणां रूपाणां रूपावलिः मुद्रापयितव्या। तथैव धातोः सकाशात् शब्दानां निर्माणं कथं भवतीति अल्पैरेव नियमैः दर्शयितव्यम्। तेन त्रिशतसंख्याकधातुभिरेव सर्वा संस्कृतवाणी सुविज्ञातुं शक्या, इति सिद्धान्ती कर्तव्य सर्वैरस्माभिः।

× × ×

(६) सर्वतन्त्र स्वतन्त्र श्री प० माधवाचार्यस्य पत्रम्, भोलेश्वर २ भाईवाडा, जरमनसिलवर बिल्डिङ्ग, ५ वॉ माला बम्बई नं० २

सेवायाम् ता २५—२—४८

श्रीमन्तो माननीया.

भारतीय विद्याप्रचारसमितिप्रधानमन्त्रिण

श्रीश्यामकुमारसिंहमहोदया प्रेमपुरस्सरं निवेदनमिदम्।

भवता २०९४ अङ्कसंयुक्त कृपापत्रं प्राप्तम्। एतदर्थं धन्यवादा वितन्यन्ते। भवद्भि —''संहिता-विवक्षायाम्'' 'लोके विसर्गादर्शनं वा' इति द्वौ विषयावधिकृत्य पत्र लिखितम्।

सर्वथा सर्वत्र वाक्ये च संहिता विवक्षाधीना विद्यते। अत्र न कस्यापि कदापि विप्रतिपत्ति। परञ्च सा यावत्सारल्य प्रसादगुणश्च न हीयेत प्रयोज्या, दुर्बोधा सरलताराहता तु संहिता कदापि न कार्या। या च संहिता सामान्यैरपि संस्कृतज्ञैर्बुध्येत सा कदापि न परित्याज्या। ये जना यादर्शी ज्ञातुमर्हन्ति शक्नुवन्ति च तेषु तादर्शी संस्कृतभाषा प्रयोज्या। संस्कृतलेखनसमये अयं विषयो ध्याने देय यत्सर्वे त लेखं जानन्तु।

या क्रिया ये च संस्कृतशब्दा यथाऽपभ्रष्टा सन्तो हिन्दीरूपता गता। ये च शब्दा अधुनाऽपि संस्कृतशब्दा एव हिन्द्या गृह्यन्ते तेषु अर्थेषु ता शुद्धा संस्कृतरूपिण्य क्रियास्त एव च संस्कृत शब्दा प्रयोज्या। यथा—

| | |
|---|---|
| जाता है—याति। | चलता है—चलति। |
| आता है—आयाति। | पत्र दिया—पत्र दत्तम्। |
| हिले है—हिलते। | घरको गये—गृह गता। |

येषा सपर्को हिन्दीभाषाया दृश्यते त एव संस्कृते प्रयोक्तव्या,

तेषां झटिति ज्ञानं भविष्यति । इत्थं संस्कृतं सत्वरं व्यवहारभाषा भविष्यति सर्वेषाम् । ये च उर्दूशब्दा आंग्लभाषाशब्दा अस्माकं भाषासु मिलिता व्यवह्रियन्ते तेषां स्थाने तादृशाः संस्कृत-शब्दा अन्विष्य प्रयोक्तव्याः । अनेनैव प्रकारेण संस्कृतव्यवहारो भविष्यति अस्मिन् विषये स्वसम्मतिं दास्यन्ति भवन्तः ।

भावत्को माधवाचार्यः ।

× × ×

(ड) महाविदुषः पं० सभापति उपाध्यायस्य बिरला संस्कृत-कालिजाध्यक्षस्य लालघट्ट काशीस्थ महोदयस्य मतं यत् १४।७।४६ तारिकायां लखनऊनगरे, माननीयस्य श्री सम्पूर्णानन्द शिक्षामन्त्रि यु० प्रा० महोदयस्य स्थाने सम्प्राप्तम्, (तदा भारतीय विद्याप्रचारसमितेः एकं विशेषाधिवेशनं आसीत् ।) उपाध्याय-महोदयाः अस्माकं कार्यकारिणिसमितेः सदस्याः सन्ति ।

(१) उपाध्याय-महोदयस्य विचारे वाक्येषु संहिता विवक्षायां विद्यते, अतएव तस्य प्रयोगः इच्छाधीनः वैकल्पिकः । संस्कृत-सारल्याय तस्य प्रयोगः सर्वत्र नियमरूपेण न कार्यः ।

(२) १० लकारेषु त्रिलकाराणां प्रयोगः पर्याप्तः वर्तमान-भूत-भविष्यत्काले अर्थात् लट् लृट् लङ् लकाराणाम् । आज्ञा विध्यादौ लोट् लकारस्य प्रयोगः स्यात् । अनेन सिद्ध्यति यत् उपाध्याय-महोदयस्य विचारे चतुर्लकाराणां आवश्यकता विद्यते लौकिक-संस्कृते ।

(३) उपाध्यायमहोदयस्य विचारे द्विवचनस्य आवश्यकता नास्ति । यथा ' वे दोनों जाते हैं ' ' तौ गच्छतः ' इसके स्थानमें ' ते गच्छन्ति ' इसका प्रयोग करें । ' आवयोः पुस्तकम् ' के स्थानमें ' तव मम च पुस्तकम् ' इसका प्रयोग करें । अनेन संज्ञायां क्रियायां च द्विवचनस्य आवश्यकता न प्रतीयते ' अस्मदो द्वयोश्च '

( १।२।४९ , सिद्धान्त कौमुदी = ८१८ ) सूत्रस्य बलेन । एक वचने तु बहुवचनस्य प्रयोग भवति यथा ' प० रामनाथमहोदयाः महाविद्वांस. सन्ति ' एवमेव द्विवचनस्थाने अपि भवेत् ।

(४) बहुव्रीहिसमासः एवमेव द्वन्द्वसमासः अधिकाधिक द्वित्रिशब्दाना भवेत् ।

( हस्ताक्षर ) सभापति उपाध्याय
बिरला संस्कृत-कालेज ललघाट, बनारस

× × ×

( ऊ ) डाक्टरस्याभिमतम् ।

२१ नवम्बरे प्रयागे भाषमाणो डा० सुनीतिकुमार चटर्जी महाशय उक्तवान्—

' अधुना समस्तदेशस्य ध्यानमस्मिन् प्रश्ने समाकृष्ट वर्तते यदस्य देशस्य राष्ट्रभाषा का भवेत् ? इति । अस्माक व्यक्तिगतो विचार सरलसंस्कृतपक्षे वर्तते । सांस्कृतिक-विचारादपि संस्कृतस्यैव राष्ट्रभाषात्वमुचितम् ' इति ।

× × ×

(ऋ) अस्माक मतम् ।

इद सम्भव अस्ति यत् पाठका. अस्माक मत ज्ञातु उत्सुकाः स्यु । अस्माक पत्रस्य, यत् प्राय सर्वेषा विदुषा सेवाया प्राहृत, अय आशय आसीत्--

" प्राय सर्वे विद्वास , भारतीया आपि च मन्यन्ते यत् एकस्मिन्काले संस्कृत एव अस्य विश्वस्य भाषणभाषा व्यवहार भाषा च आसीत् । पाश्चात्यविद्वास अपि मन्यन्ते यत् कदाचित् संस्कृत अर्थात् वैदिकभाषा सर्वप्रथम विश्वभाषा आसीत् यतो हि तेषा विचार " ऋग्वेद ' मानवपुस्तकालये प्राचीनतम लिखित

ग्रन्थः प्राप्यते। अनन्तरं शनैः शनैः संस्कृतस्य भ्रंशरूपाणि विश्वे प्रसृतानि यानि अद्य अवलोक्यन्ते। यदा भारतसाम्राज्यं विशेषतया सांस्कृतिक-विजय-पूर्ण-साम्राज्यं लोके उन्नतेः उच्चतम-शिखरं, गौरव- वैभव- गिरिशृङ्गं अलङ्करोति स्म, तदा भारतस्य वार्ता का, तस्य उपनिवेशेषु अपि संस्कृतं न केवलं धर्मभाषा अपि तु सर्वसाधारिणी जनभाषा, राष्ट्रभाषा च आसीत्। द्वितीयं तत् अंगरेजीवत् विश्वे अन्ताराष्ट्रीयभाषा आसीत्। भारत-देशे तु सर्वं कार्यं संस्कृतेन एवं भवति स्म यत् अद्य अपि संस्कृतस्य प्राप्तसाहित्येन प्रकटीभवति। परं अद्य संस्कृतस्य परमह्रासः सञ्जातः। अद्य 'अमरा' संस्कृतभाषा 'मृता' कथ्यते भारतीयैः अपि। अद्य सा देशे अपि जनभाषा, राजभाषा राष्ट्रभाषा न अस्ति, का कथा तस्याः अन्ताराष्ट्रीयभाषात्वस्य!

कथं इदं सञ्जातम्, अयं प्रश्नः उपतिष्ठते। कथं देशे संस्कृतस्य एतावान् ह्रासः सञ्जातः, यत् अद्य जनाः तस्य नाम अपि न गृह्णन्ति। मया दीर्घकालात् गम्भीरतया विचारितः अयं प्रश्नः। वस्तुतः स्वत एव हृदये अयं प्रश्नः उत्पन्नः, स्वत एव किञ्चित् उद्बोधनं अपि सञ्जातम्। मया विचारितं यत् येन मार्गेण संस्कृतभाषायाः घोरतमः ह्रासः सञ्जातः, तस्य मार्गस्य प्रत्यावर्त्तनं एव कल्याणकरं भवितुं अर्हति। येन येन कारणेन संस्कृते काठिन्यं, दुर्बोधत्वं, अव्यवहारत्वं इत्यादिकं उत्पन्नं, तस्य तस्य कारणस्य दूरीकरणं हितकरं भवितुं अर्हति। अहं यथास्थानं विस्तरेण सर्वं प्रदास्यामि, पर इदं तु सर्वे संस्कृतज्ञाः विद्वांसः जानन्ति एव, यत् वैदिकभाषा व्याकरणनियमेषु अबद्धा, परं लौकिकसंस्कृतभाषा व्याकरणनियमेषु पूर्णतया बद्धा बन्दी-कृता च विद्यते। सत्यं तु इदं अस्ति यत् लौकिकसंस्कृतं प्रथमं

व्याकरणनियमान् निर्माय वैदिकभाषातः उत्पन्नीकृतम्। वैदिक भाषा देवानां भाषा अतएव स्वर्गीया, वास्तविकरूपेण कल्याणकरा, दोषरहिता च, परं लौकिकसंस्कृतं मनुष्यैः उत्पन्नीकृतम्। अतेन तस्मिन् विविधा दोषाः आगताः। समये समये विविधजनैः एते संस्कृतव्याकरणनियमाः निर्मिताः येन संस्कृतं अत्यन्तं कठिनं दुर्बोधं च सञ्जातम्। कदापि कदापि वैकल्पिकनियमानां व्यापकरूपेण प्रयोगः अभवत्। यस्मात् कालात् भारतीयानां दासता आरब्धा, तस्मात् कालात् सर्वत्र पतनस्य चिह्नानि अवलोकयन्ते। भारतीयाः प्रायः क्षुद्राः सञ्जाताः। क्षुद्रत्वात्, मिथ्यागर्वत्वात च संस्कृतं अपि अत्यन्तं तैः दुर्बोधं कठिनं च कृतम्। प्रायः शत-द्विसहस्र-वर्षेषु अधिकतरं एतादृशं साहित्यं निर्मितं यस्य सम्यक् ज्ञानं दुष्करम्। सत्यं कथितं श्रद्धेय-पं० श्रीपाद दामोदर सातवलेकर महोदयैः यत्—

"पण्डितैरेव संस्कृतभाषा कठिनीकृता। तेन सर्वेषां जनानां संस्कृत-विषये अरुचिः सञ्जाता। अतः पण्डितैरेव भाषाशुद्ध्यर्थं प्रायश्चित्तं कर्तव्यम्"

अस्माकं मतं तदा आसीत्—

(१) वाक्येषु संहिता विवक्षायां विद्यते। अतएव संस्कृते सारल्यस्य आनयनाय सन्धेः प्रयोगः अकार्यः, येन शब्दाः स्वरूपे तिष्ठन्तु, येन संस्कृतपठनं तस्य ज्ञानं च सरलं भवेत्।

(२) दश लकाराणां आवश्यकता नास्ति अद्यतन अनद्यतनभेदं अवलम्ब्य। अधिकादधिकं पञ्च लकाराः स्युः यथा लट्, लृट्, लोट्, लङ्, लिङ् (विध्यादौ) अर्थात् वर्तमाने लट्, भविष्यकाले लृट्, भूतकाले लङ्, आज्ञायां लोट् तथा विध्यादौ एवमेव हेतुहेतुमद्भावे च लिङ्। वस्तुतः ४ लकाराः यथा लट्

(वर्तमाने), लृट् (भविष्यकाले), लङ् (भूतकाले), लिङ् (विध्यादौ अर्थात् विधि, आज्ञा, हेतुहेतुमद्भावे च) प्रयुज्यमानैः कार्यं पूर्णतया चलितुं शक्नोति। विश्वस्य अन्यासु सर्वासु भाषासु १० लकाराः न सन्ति अद्यतन-अनद्यतन-भेदं अवलम्ब्य। अनेन संस्कृतं अत्यन्त कठिनं सञ्जातम्। यथास्थानं अस्याः स्थिते पूर्णं विवरणं करिष्यते दास्यते च।

(३) द्विवचनस्य संज्ञायां क्रियायां च आवश्यकता नास्ति एवमेव तासां अन्येषु भेदेषु। जर्मनादि-द्वित्रिभाषाः विहाय संसारस्य कस्यां अपि भाषायां द्विवचनं नास्ति। अन्यासु सर्वासु भाषासु एकवचनं बहुवचनं च विद्यते। अयं भेदः बुद्धौ अपि समायाति यत् एकं अनेकं वा वचनम्। द्विवचनं स्यात्तदा त्रिवचनं, चतुर्वचनं इत्यादिकं कथं न स्यात्? एवमेव कालविभागं अवलम्ब्य चतुर्विधलकारेषु व्यावहारिकदृष्ट्या इदं सर्वं कार्य्यं करणीयम्। व्यावहारिकतां उपयोगितां विहाय यद्यत् कार्य्यं करिष्यते तत्तत् हानिकरं भविष्यति।

(४) "मोऽनुस्वारः" (८।३।२३।१) इति सूत्रानुसारं अचि परे सति अपि मान्तस्य पदस्य अनुस्वारः स्यात् यथा हलि परे सति भवति।

(५) समासः क्रियेत चेत् तदा द्वित्रिशब्दादधिकः न भवेत्। एवमेव सन्धिः क्रियेत चेत् तदा द्वयोः शब्दयोः भवेत्। साम्प्रतं अस्माकं निश्चितं मतं अस्ति यत् न्यूनातिन्यूनं २५ वर्षपर्यन्तं सन्धिराहित्येन भाषणेन लेखनेन च भवितव्यं, येन संस्कृतं गृहे गृहे, ग्रामे ग्रामे, नगरे नगरे, प्रान्ते प्रान्ते च प्रविशेत्।

(६) अन्तिमं मम निवेदनं इदं आसीत् 'लोके विसर्गादर्शनम्' (लोके विसर्ग-अदर्शनम्) परं इदं संशोधनं संस्कृते स्वतः

एव २५ वर्षानन्तरं भविष्यति यदा संस्कृतस्य देशे महीयान् प्रचारः भविष्यति। अस्य सूत्रस्य अय आशयः, " व्याकरणानुसारं विसर्गस्य यथास्थानं प्राप्तिः तु भवेत्, परं अस्य सूत्रस्य बलेन तस्य विसर्गस्य लोपः मन्येत, " यथा एकवचने रामः, बहुवचने रामाः, अस्य सूत्रस्य बलेन राम एकवचने, रामा बहुवचने स्यात्। द्विवचनं तु वस्तुतः अपनेतु शक्यते। अनेन संशोधनेन संस्कृतं सरलतमं भविष्यति तथा मराठी, गुजराती, बंगला, हिन्दीवत् संस्कृतं शब्दः रूपं ग्रहीष्यति। संस्कृतात् सर्वाः प्रान्तीयाः भाषाः निस्सृताः अतएव अस्मिन् अन्तिमे रूपे संस्कृतं एव देशस्य भाषा भविष्यति। यत्र समानाः शब्दाः विद्यन्ते तत्र विसर्गाः तिष्ठतु यथा ' वयं स्मः ' त गच्छान्ति स्म। अर्थभेदे समानशब्देषु विसर्गः दीयेत। सविस्तरं विवरणं यथास्थानं दास्यते। विसर्गस्य अदर्शने कः लाभः भवितुं अर्हति पुस्तकस्य अन्तिमे अध्याये स्पष्टीकरिष्यते।

## उत्तराणि

पूर्वोक्तानि उत्तराणि महत्त्वपूर्णानि सन्ति, अतएव तेषां सार. अत्र दीयते। अनेकानि पत्राणि प्राप्तानि अस्माभिः उत्तररूपेण, परं केवलं पूर्वोक्तानि मतानि दत्तानि उदाहरणार्थम्। तेषां सर्वेषां सविस्तरं विवेचनं यथास्थानं करिष्यते।

( अ ) ( आ ) सुप्रसिद्धस्य ' संस्कृतम् ' पत्रस्य सम्पादकैः महाविद्भिः प. कालीप्रसादशास्त्रिमहोदयैः स्वलेखे ' लेखनं कीदृशम् ' तथा पत्रे इद मन्यते यत् ' सन्धिः वाक्ये तु विवक्षां अपेक्षते ' द्वितीयं इदमपि मन्यते तैः यत् सरलतमेन संस्कृतेन भवितव्यम्। इयं स्थितिः तु वस्तुतः सर्वैः विद्वाद्भिः पूर्वोक्तैः मन्यते विशेषतया सुप्रसिद्ध वेदज्ञैः पं० सातवलेकर तथा महा-

विद्वद्भिः पं. सभापतिमहोदयैः। वस्तुतः सर्वे विद्वांसः एकमताः सन्ति यत् 'सरलतमेन संस्कृतेन भवितव्यम्' अन्यथा तत् कदापि व्यावहारिकी भाषा राष्ट्रभाषा च न भविष्यति। इदं तु निर्भ्रान्तं सूर्यवत् सत्यं अस्ति। अस्मिन् विषये मतद्वयं भवितुं न अर्हति। इदमपि सुस्पष्टतया निवेदितं यत् "सन्धिः वाक्येषु वैकल्पिकः" इदं संशोधनं नास्ति। अहं मन्ये कतिपयानि संशोधनानि प्रचलित-संस्कृते आवश्यकानि सन्ति व्यावहारिक-दृष्ट्या। परं अत्र अयं प्रश्नः यत् अस्य नियमस्य कदा प्रारम्भः श्रीगणेशः वा करिष्यते। 'संस्कृतम्' इति पत्रस्य सुप्रसिद्धसम्पादकस्य इयं प्रतिज्ञा यत् "अस्यामेव शताब्द्यां संस्कृत राष्ट्रभाषा भवेदयमेव संस्कृतस्योद्देशः"। तदा गम्भीरतया इदं अपि विचारणीयं तैः यत् संस्कृतं प्रचलितरूपे राष्ट्रभाषा भवितुं अर्हति न वा। द्वितीयं यदा इदं मन्यते सर्वैः विद्वद्भिः यत् 'सरलतमेन संस्कृतेन भवितव्यम्' तदा इदं अपि विचारणीयं यत् लौकिकसंस्कृते कानि कानि संशोधनानि आवश्यकानि सन्ति तथा केषां नियमानां पालनं आवश्यकं अस्ति? कथं इदं सर्वं तैः न विचार्यते तथा सम्यक् विचार्य कार्ये परिणतं न क्रियते। तेषां महोदयानां इदं कथनं पर्याप्तं नास्ति "...अत्रान्यैरपि विद्वद्भिः स्वविचारो व्यक्तीकरणीयो यत् संस्कृतभाषा कीदृशी स्यात्" ते अपि महा विद्वांसः सन्ति, कथं तैः इदं न विचार्यते। कथं तैः स्वपत्रे (संस्कृतम्) सन्धिरहितं सुन्दरं सरलतमं संस्कृतं न लिख्यते यत् दीर्घकालपर्यन्तं अर्थात् न्यूनातिन्यूनं महाभारतकालात् आरभ्य अद्यपर्यन्तं "सन्धि-प्रयोगः" नियमरूपेण सर्वत्र सर्वासु दशासु कृतः, येन संस्कृते कल्पनातीतं काठिन्यं सञ्जातम्, येन संस्कृतं जनभाषा, राजभाषा, राष्ट्रभाषा च न अतिष्ठत्।

सुप्रसिद्धवेदज्ञ-महाविद्वान् पं. सातवलेकर महोदयस्य शब्देषु "पण्डितैरेव भाषा शुद्ध्यर्थं प्रायश्चित्तं कर्त्तव्यं, यत पण्डितैरेव संस्कृतभाषा काठिनीकृता।" पं. सातवलेकर महोदयैः 'संस्कृतम्' पत्रस्य सम्पादकेभ्यः इदमपि लिखित आसीत् "पठनसौकर्याय विच्छिन्नपदानां साहाय्यं सञ्जायते। समस्तैः पदैः सन्धिभूतैश्च काठिन्यं भवति। संहिता वाक्ये विवक्षां अपेक्षते.... इत्यादि"। परं तु खेदः अयं समाचारः यत् तैः आपि सन्धिराहित्येन न लिख्यते। तेषां महोदयानां सेवायां अस्माकं सविनय इदं निवेदनं यत् उदाहरणं श्रेष्ठतरं भवति। कथं ते इदं न क्रियते। अस्माकं पत्रव्यवहार प० सातवलेकर महोदयैः सह सदैव चलति। ते अस्माकं भारतीय विद्याप्रचार-समिते कार्यकारि-सभाया प्रतिष्ठितसदस्याः सन्ति। ते स्वपत्रेषु कदापि संस्कृतं सन्धिराहित न लिखन्ति यद्यपि अहं विचारयामि यत्ते तस्य आवश्यकतां अनुभवन्ति। तैः स्वविचारानुसार अनेन प्रकारेण लेख्य आसीत् यत "पण्डितै एव भाषाशुद्ध्यर्थं प्रायश्चित्तं कर्त्तव्य, यत पण्डितैः एव संस्कृतभाषा काठिनीकृता।"

मया 'संस्कृतम्' पत्रस्य सम्पादका आपि विशेषतया निवेदिताः, यत्ते स्वप्रसिद्ध 'संस्कृतम्' पत्रे सारल्यस्य आनयनाय सन्धिराहित्येन लिखेयुः। परं तेषां इदं उत्तर विद्यते "भाषणसमये सन्धौ नियमराहित्य स्वत एव जायते पर न तल्लेखनवस्तु। अस्माकं समस्तभारतस्य महाविदुषां पत्रम्। तत्र नियमराहित प्रकाशनमसम्भवम्। "वाक्ये तु सन्धि विवक्षामपेक्षते इत्येवमन्ये।" विचित्रा स्थिति यत् इमे स्वपत्रे आवश्यक सुधार न कारिष्यन्ति तदा कः कारिष्यति। तेषां शब्दैः इदमपि प्रतीयते यत्ते तस्य आवश्यकतां अनुभवन्ति, पर 'महाविदुषां पत्रम्'

इति भयात् सुधारं कर्तुं न उद्यताः सन्ति। एवं प्राप्ते सति अस्य कः अर्थः। ते बिभ्यति यत् यदि ते अमुं आवश्यकं अपि सुधारं करिष्यन्ति तदा कश्चित् अपि विद्वान् तेषां पत्रं न पठिष्यति। तेषां भयः कदाचित् उचितः यत् अद्य कश्चित् अपि विद्वान् न मन्यते यः नियमरूपेण भाषणे लेखने च सन्धिं न करोति। भूयः अहं निवेदयामि यत् अस्मिन् विषये 'महाविदुषाम्' एव, दुरभ्यासः एकमात्रकारणम्। तदा कथं दुर्बोधत्वं काठिन्यं दूरीभविष्यति। ते अपि सारल्यं इच्छन्ति राष्ट्रभाषात्वं कामयन्ते परं सारल्य-विरोधि-राष्ट्रभाषात्वविरोधिकारणानि दूरीकरणे न कटिबद्धाः भवन्ति। सम्पादकमहोदयाः 'लेखनं कीदृशम्' इति लेखे लिखन्ति "...... सन्धिः शोभां वर्धयति लघुत्वञ्चापादयति।" परं अहं सन्धिप्रयोगे शोभां लघुत्वं वा न अवलोकयामि। तैः लिख्यते "अत्रान्यैरपि विद्वद्भिः स्वविचारो व्यक्तीकरणीयो यत् संस्कृतभाषा कीदृशी स्यात्" अस्य वाक्यस्य अनेन प्रकारेण लेखने 'अत्र अन्यैः अपि विद्वद्भिः स्वविचारः व्यक्तीकरणीयः यत्संस्कृतभाषा कीदृशी स्यात्' वस्तुतः सुबोधत्वं लघुत्वं आयाति। स्वविचारो 'व्यक्तीकरणीयो' स्थाने 'स्वविचारः व्यक्तीकरणीयः' लघुत्वं प्रदर्शयति। शब्दाः स्वरूपे तिष्ठन्तु, तदा शोभनं स्यात्, यत् सन्धिप्रयोगेण कदापि भवितुं न अर्हति। भूयः विचारणीयः सम्पादकमहोदयैः यत "संस्कृतस्य सारल्याय एवमेव राष्ट्रभाषात्वाय" कानिकानि-कार्याणि करणीयानि सन्ति।

(इ) (ई) (उ) सुप्रसिद्ध वेदज्ञाः पं० सातवलेकरमहोदयाः अस्माकं निवेदनस्य प्रायः समर्थनं कुर्वन्ति एवमेव महाविद्वांसः पं० सभापतिमहोदयाः अपि। एतेषां महाविदुषां मते (१) सन्धिः वैकल्पिकः, अतः वाक्येषु सारल्यस्य आनयनाय सन्धिप्रयोगः

अकार्यः ( २ ) लौकिकसंस्कृते अधिकाद्धिकं ५ लकाराणां अर्थात् लट्, लृट्, लोट्, लङ्, लिङ् ( विधिः ) लकाराणां प्रयोगः स्यात्, परं चतुर्लकाराणां अपि प्रयोगः भवितुं अर्हति । ( ३ ) द्विवचनस्य प्रयोगः वैकल्पिकः स्यात् पं० सातवलेकरस्य मते । ते कथयन्ति "...... अतः द्विवचनं ऐच्छिकं वैकल्पिकं वा भवतु प्रथमारम्भसमये ।" परं पं० सभापतिमहोदयस्य मते तस्य प्रयोगः अकार्यः यत् अस्माकं मतं अपि अस्ति । ( ४ ) समासः द्वित्रिपदानां आधिकादधिकं भवेत् । अस्मिन् सम्बन्धे पं० सातवलेकरमहोदयाः कथयन्ति " समासविषये पदच्छेदपूर्वकं लेखनेन न काठिन्यं भविष्यति । यथा पर्वत-शिखर-स्थित-कुसुम-संचयः, इति तु स्पष्टतरं भवति लेखनम् । अतः सर्वत्र समासे पदच्छेदपूर्वकं लेखनं कार्यम् । द्वित्रिपदयुक्ताः समासाः भवेयुः, तदधिकपदयुताः निषेद्धव्याः सारल्येच्छुभिः ।" न्यूनातिन्यूनं वैकल्पिकरूपेण समासानां पदच्छेदपूर्वकं लेखनं स्यात् । इदं स्वतः एव क्रियते साम्प्रतम् 'संस्कृतम्' पत्रे एवमेव अन्येषु संस्कृतसमाचारपत्रेषु इदं अवलोक्यते यथा १५-२-४९ तारिकायाः 'संस्कृतम्' पत्रे पृष्ठद्वये अनेन प्रकारेण दीयते 'प्रयागीय-अलोपीबागस्थः ।' अथ विचारणीयः विषयः । ( ५ ) संस्कृते विसर्गस्य प्रयोगः प्राचुर्येण भवति । इदं निवेदितं मया यत् लौकिकसंस्कृतं निर्मितं पण्डितैः वैदिक भाषातः प्रथमं संस्कृत-व्याकरणं विरच्य । 'संस्कृतम्' नाम एव इदं प्रदर्शयति । संसारस्य अन्यासु भाषासु विसर्गस्य एतावान् प्रयोगः न जायते । कथं 'संस्कृते' इदं अभवत् अस्य कारणमस्ति । विसर्गेण सन्ध्यादिषु सौविध्य उत्पद्यते । महाभारतात् अनन्तरं प्रायः ५ सहस्र वर्षेषु संस्कृतं प्रचलितरूपयुतं सञ्जातं यत् कठिनतमं दुर्बोधतमं विद्यते । अतएव विसर्गस्य

अदर्शनं स्यात् अर्थात् व्याकरणानुसारं तस्य प्राप्तिः तु भवेत् परं लोपः मन्येत। अनेन वर्णनातीतं सारल्यं संस्कृते आगमिष्यति, तथा संस्कृतं भूयः अपि अस्य देशस्य जनभाषा, राजभाषा, राष्ट्रभाषा तथा अन्ताराष्ट्रीय भाषा भविष्यति पूर्ववत्। अयं अन्तिमः सुधारः।

'संस्कृतम्' पत्रस्य सम्पादकमहोदयैः स्वलेखे 'लेखनं कीदृशम्' कथितं आसीत्, यत् "अन्यैरपि विद्वद्भिः स्वविचारो व्यक्तीकरणीयो यत्संस्कृतभाषा कीदृशी स्यात्।" इदं लिखितं आसीत् तैः १-६-४६ तारिकायां स्वपत्रे। परं अद्यावधि देशस्य विद्वद्भिः अयं विषयः सम्यग्रूपेण न विचारितः। अयं अत्यन्तमहत्त्वपूर्णः विषयः आसीत्, परं केन अपि विदुषा अत्र ध्यानं न अदायि। अतएव अहं पुस्तकरूपेण स्वमतं स्पष्टं करोमि। इदं तु सुस्पष्टं एव यत् यैः विद्वद्भिः अस्मिन् विषये विचारः कृतः ते प्रायः अस्माकं निवेदनस्य समर्थनं कुर्वन्ति। ये विद्वांसः समर्थयन्ते ते देशस्य महाविद्वांसः महान्तः जनाः सन्ति। अनेन सिद्ध्यति यत् अस्माकं निवेदनं समीचीनं, युक्तियुक्तं, संस्कृतहिताय एव विद्यते। इदानीं एकैकं विषयं अवलम्ब्य सविस्तरं विवेचनं क्रियते।



# अध्यायः २

## सन्धिः।

### "असंहिता वाक्ये"

इदं लिखितं गताध्याये यत् "वाक्येषु संहिता विवक्षां अपेक्षते" अर्थात् वाक्येषु सन्धिः क्रियेत न वा। सर्वैः विद्वद्भिः इयं स्थितिः मन्यते। परं गम्भीरविचारेण इदं प्रतीयते यत् "वाक्येषु संहिता न भवितुं अर्हति।" वाक्ये का स्थितिः भवति? वाक्ये तु विविध-पदानि पृथक् पृथक् भवन्ति। व्याकरणानुसारं संहिता 'एकपदस्य वर्णानां' भवितुं अर्हति, एवमेव 'संयोगः' 'एकपदस्य हलक्षराणाम्'। समासे विविधपदानां योगः भवति। समासस्य व्याकरणानुसारं सामूहिकरूपेण 'पदसंज्ञा' सञ्जायते। अतएव समासे संहिता भवितुं अर्हति, एवमेव संयोगः अपि। अनेन सिद्ध्यति वाक्येषु कदापि संहिता भवितुं न अर्हति। 'वाक्येषु संहिता विवक्षां अपेक्षते' अथवा 'वाक्येषु संहिता विवक्षाधीनं विद्यते,' इयं संस्कृतव्याकरणानुसारं सत्या स्थितिः नास्ति। अस्मिन् विषये नियमाः अवलोकनीयाः—

परः संनिकर्षः संहिता ।१।४।१०९

व्याख्या— वर्णानां अतिशयितः संनिधिः संहितासंज्ञः स्यात्।

हलोऽनन्तराः संयोगः ।१।१।७

व्याख्या— अज्भिः अव्यवहिताः हलः संयोगसंज्ञाः स्युः।

सुप्तिङन्तं पदम् १।४।१४

व्याख्या— सुबन्तं तिङन्तं च पदसंज्ञं स्यात्।

इमानि सूत्राणि 'संज्ञा-प्रकरणे' विद्यन्ते। प्रथमं तु तस्मिन् प्रकरणे वर्णानां अक्षराणां वा वर्णनं विद्यते। वर्णानां समूहः कदा 'पदम्' भवति इदं अपि दीयते तत्र। पदसंज्ञं किं भवति इदं दत्वा 'उपर्युक्त-प्रकरणम्' समाप्तं भवति। पदे अनके वर्णाः अक्षराणि, वा भवन्ति। पदस्य अक्षरेषु कदा 'संहिता' भवति, कदा 'संयोगः' तत् एव तत्र वर्णितं विद्यते। यद्यपि समासः विविधपदानां समूहः भवति, न विविध-वर्णानां अक्षराणां वा, परं यत्र विविध-पदानि एकपदत्वं गृह्णन्ति, तत्र तेषां पदानां वर्णाः सांनिध्यकारणात् संहिता-संज्ञकाः संयोग-संज्ञकाः वा भवितुं अर्हन्ति। परं इद अपि सम्यग्रूपेण अवबोधनीयं यत् समासे विविधपदानि प्रातिपदिकरूपत्वेन तिष्ठन्ति। अनन्तरं 'सुप्' आदि-विभक्तयः क्रियन्ते एकपदवत्। अतएव वास्तविकस्थितिः इयं अस्ति यत् समासे अर्थवतां शब्दानां समूहः प्रातिपदिकरूपेण भवति। अनन्तरं स समासः सुबन्तरूपं गृह्णाति अर्थात् पदरूप भवति।

अर्थवदधातुरप्रत्ययः प्रातिपदिकम्।१।२।४५

व्याख्या—धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वा अर्थवत् शब्द-स्वरूप प्रातिपदिकसंज्ञं स्यात्।

अनेन सिद्धयति यत् समासे तु 'संहिता' 'संयोगः' वा भवितुं अर्हति एकपदरूपत्वात्, परं वाक्ये तु कदापि भवितुं न अर्हति। वाक्ये तु विविधानि सुबन्त-तिङन्त-युतानि पदानि भवन्ति।

तत्र अर्थयुताः पदसमूहाः न भवन्ति, प्रातिपदिकरूपाः यथा समासे भवन्ति। मया पूर्वं सूत्राणि दत्तानि येन इदं सर्वं सुस्पष्टं जायते, यत् एकस्मिन् पदे तस्य वर्णानां संहिता संयोगः वा भवितुं अर्हति। सिद्धान्त-कौमुद्याः प्रकरणविभागेन अपि इदं सिद्धं भवति। तत्र प्रथमं 'संज्ञाप्रकरणम्' दीयते, येन सिद्धयति यत् पदवर्णेषु कान् कान् नियमान् अवलम्ब्य 'संहिता, संयोगः'

वा भवति। अनन्तरं 'सुबन्त-प्रकरणम्' दीयते। कथं प्रातिपदिकात्पदस्य निर्माणं भवति, अस्मिन् प्रकरणे इदं वर्णितं विद्यते। अनन्तरं 'समास-प्रकरणम्' दीयते। अत्र वर्णितं अस्ति यत्कथं विविधशब्दाना 'एकपद' सञ्जायते। अनेन संहिताविषये संयोगविषये च एकपदत्वं आवश्यकं, यत् वाक्ये न भवति। अत्र अयं प्रश्न अपि भवितु अर्हति यत्समास: क:? वाक्यं किम्,' भवति?

## समासः।

समासः पञ्चधा। 'तत्र समसनं' समासः अर्थात् विविधशब्दान् संहितीकृत्य एकपदं इति समासः कथ्यते। स च विशेषसंज्ञाविनिर्मुक्तः केवल-समास. प्रथमः इत्यादयः। वाक्यं तु सर्वथा भिन्न भवति। अत्र विविधपदानां (पृथक् पृथक्) समूहः भवति। तस्य एकपदत्व न भवितुं अर्हति केन अपि विचारेण। तत्र पदानि तु प्रकृतिवशात् पृथक् पृथक् विद्यन्ते।

## समासे वाक्ये च भेदः।

समासे वाक्ये च कः भेदः भवति, अत्र दीयते, येन सर्वं निवेदनं सुस्पष्टं भवेत्।

समर्थः पदविधिः। २।१।१।

व्याख्या— पदसम्बन्धीयः विधिः स समर्थाश्रितः बोध्यः। अर्थात् समासे अनेकपदानां यत्सन्ध्यादिकार्यं तत् समर्थः भवति। समर्थस्य भावः सामर्थ्यम्, तत् च द्विविधम्, व्यपेक्षारूपम्, एकार्थिभावरूप च। तत्र स्वार्थपर्यवसायिनां पदानां आकाङ्क्षादिवशात् यः परस्परसम्बन्धः सा व्यपेक्षा भवति। यथा वाक्ये-'राज्ञः पुरुष.' इत्यादौ सा तिष्ठति। एकार्थिभावत्व च पृथगर्थाना पदानां एकार्थोपस्थितिबोधजनकत्वम्। यथा समासे-'राजपुरुषः' इत्यादौ। अत्र भिन्नार्थकशब्दयोः एकार्थबोधकत्वं

विद्यते अतएव तत्र एकपदत्वं तिष्ठति। व्यपेक्षारूपसामर्थ्ये तु समासः न भवति, पदसमूहे एकार्थबोधकत्वस्य अभावात्। अतएव वाक्ये अनेकपदानि तिष्ठन्ति, परं समासे तु अनेकपदेषु एकार्थस्य उपस्थित्या एकपदत्वं तिष्ठति, अतएव समासः एकार्थिभावरूपः सामर्थ्ये एव भवति। व्यपेक्षारूपसामर्थ्ये तु पदसमूहानां भिन्नार्थकत्वेन अनेकार्थबोधकत्वात् वाक्यं एव तिष्ठति।

अनया व्याख्यया ज्ञातं स्यात् यत् वाक्ये पदानि पृथक् पृथक् तिष्ठन्ति, परं समासे अर्थवतां शब्दानां एकपदत्वं सञ्जायते। व्याकरणानुसारं-पदे संहिता संयोगः वा भवितुं अर्हति, न तु वाक्ये।

एवं प्राप्ते सति अयं प्रश्नः उपतिष्ठते यत् वाक्ये कथं सन्धिकरणं सञ्जातम्। अहं विचारयामि यत् प्राचीनकाले अस्माकं भारतदेशे मुद्रणालयाः न आसन्, पुस्तकलेखनकार्यं हस्तेन भवति स्म। अतएव लघुत्वस्य सम्पादनाय इयं परिपाटी प्रचलिता व्याकरणविरोधिनी अपि। अद्य तु तस्याः आवश्यकता नास्ति। साम्प्रतं तु देशे स्थाने स्थाने मुद्रणालयाः सन्ति येषु यन्त्रद्वारा प्रकाशनं भवति। कागदादिसामग्री अपि प्रचुरमात्रायां प्राप्यते। अतएव इयं परिपाटी सर्वथा परित्याज्या परिहार्या च।

परं विद्वद्भिः, यदि अयं पक्षः समर्थितः स्यात् यत् 'वाक्ये तु सन्धिः विवक्षामपेक्षते' तथापि इच्छाधीनत्वात् तस्य प्रयोगः साम्प्रतं अकार्यः, येन संस्कृतभाषायां सारल्यं आगच्छेत्। इदं कार्यं क्रियेत चेत् तदा अद्य संस्कृतं राष्ट्रभाषा भवितुं अर्हति सुबोधत्वात्। अनन्तकालपर्यन्तं संस्कृतं एव अस्य देशस्य धर्मभाषा, जनभाषा राजभाषा राष्ट्रभाषा च आसीत्। तत् बहुकालपर्यन्तं जगति अन्ताराष्ट्रीय-भाषारूपत्वेन अतिष्ठत्। संस्कृत-साहित्यस्य

अतुलभाण्डारः भग्नावशेषरूपेण अद्य अपि प्राप्यते, यः तस्य गौरवं उच्चतमं पदं च प्रकटयति। विद्यायाः कश्चित् अपि विभागः नास्ति यस्मिन् पुस्तकं पुस्तकानि वा न स्युः। अस्य देशस्य अध्यात्मवादः प्रख्यातः। अनेन एव भारतस्य 'गुरुत्वं संसारे अतिष्ठत्।' संसारे कुत्र अपि एतादृशं आत्मतत्त्व-विवेचनं न प्राप्यते। भारतस्य दर्शनशास्त्रं सुप्रसिद्धं सुविख्यातम्। अपौरुषेयान् भगवतः वेदान् आरभ्य गीतादि ग्रन्थपर्यन्तं प्रायः सर्वेषु ग्रन्थेषु अदृष्टपूर्वं, अद्वितीयं अध्यात्मवर्णनं प्राप्यते। गीतासदृशं पुस्तकं संसारे न प्राप्यते अद्यावधि। जर्मनतत्त्ववेत्ता शॉपिनहोयर' स्वग्रन्थे कथयति यत् यावत् तेन गीता-गंगायां स्नानं न कृतं तावत् तस्य आत्मसंशयः दूरं न गतः। एवमेव अन्यैः पाश्चात्यतत्त्वदर्शिभिः कथ्यते। परं अद्य इदं सर्वं ज्ञान-विज्ञानं (लौकिकं पारलौकिकं च) भारतीयानां कृते अपि तिरोहितं सञ्जातं संस्कृत भाषायाः काठिन्यकारणात् दुर्बोधत्वात् च। वस्तुतः संस्कृतं अत्यन्त सरलं अस्ति, परं मध्यकालीनैः विद्वद्भिः महाभारतकालं आरभ्य अद्यपर्यन्तं एतावत्कठिनीकृतं येन तस्य पठनं अपि सर्वसाधारणजनानां कृते असम्भवं सञ्जातम्। भारतस्य दौर्भाग्येण देशस्य पण्डितवर्गः संकुचितहृदयः सञ्जातः। एकस्मिन् सम्पादकीये लेखे संस्कृतप्राणैः पं० कालीप्रसादशास्त्रिभिः (सम्पादक, 'संस्कृतम्') महोदयैः लिखितं आसीत् "...अहं तु इमां वार्तां नतेन शिरसा स्वीकरोमि यत्संस्कृतं यौद्धकालात् न्यक्कृतत्वात् केवलं विद्वत्सु एव लब्धप्रचारं विद्यते...। परं कथं संस्कृतं स्वपदात् च्युतम्, तथा कैः अधोनीतम्, अयं अपि प्रश्नः विचारणीयः। मम उत्तरं इदं अस्ति यत् तत्कालीनैः पण्डितैः संस्कृतं स्वपदात् अधोनीतम्। शनैःशनैः संस्कृते कठिनता आनीता, अनेन तत् अपनीतम्। अहं अत्र एकं उदाहरणं ददामि यत्

तस्मिन्काले कीदृशं संस्कृतं प्रचालितं पण्डितैः। कादम्बरीतः एकं उद्धरणं दीयते—

( पृष्ठसंख्या २१४ तः २१९ पर्यन्तम् )

"प्रभातायां च निशीथिन्यां समुत्थाय समभ्यनुज्ञातः पित्राभिनवमृगया कौतुकाकृष्यमाणहृदयो भगवत्यनुदितएव सहस्ररश्मावारुह्येन्द्रायुधमग्रतो,'चालेप्रप्रमाणा'ऽनाकपर्यद्भिश्चामरीकरशृङ्खलाभिः कौलेयकाञ्जरद्व्याघ्रचर्मशवलवसन कञ्चुकधारिभिरनकवणपट्ट चीरिकोद्बद्धमौलिभिरुपाचितश्मश्रुगहन – मुखैरेकवर्णावसक्त-हेमतालापुटैराबद्धनिविड-कक्षैरनवरतश्रमोपचितोरुपिण्डकैः कोदण्डपाणिभिः श्वपोषकैरनवरतकृतकोलाहलैः प्रधावद्भिर्द्विगुणीक्रियमाणमनोत्साहो बहुगजतुरगपदातिपरिवृतो वनं ययौ। तत्र चाकर्णान्ताकृष्टमुक्तैर्विकचकुवलयपलाशकान्तिभिर्भल्लैर्भद्रकलकल—कुम्भभित्तिभिदुरैश्च नाराचैश्चापटङ्कारभयचकितवनदेवताधाक्षवीक्षितो वनवराहान् केशरिणः शरभांश्चामराननेक कुरङ्गकांश्च सहस्रशो जघान। अन्यांश्च जीवन एव महाप्राणतया स्फुरतया जग्राह। समारूढे च मध्यमह्नः सवितरि वनात् स्नानोत्थितेनेव श्रमसलिलविन्दुवर्षमनवरतमुञ्झता मुहुर्मुहुर्दशनविघट्टनैः खणखणायितखरखलीनेन श्रमशिथिलमुख विगलित फेनिलरुधिरलवेन पर्याणपट्टकानुसरणोत्थितफेनराजिना कर्णावतंसीकृतमुत्फुल्लकुसुमशवलमलिपटलझङ्कार—रवमुखरं वनगमनचिह्नं पल्लवस्तवकमुद्वहतेन्द्रायुधेनोह्यमानःसमुद्गतस्वेदतयाऽन्तरार्द्रीकृत मण्डलेन मृगरुधिरलवशतशवलेन वारबाणेन द्विगुणतरमुपजातकान्तिः अनेकरूपानुसरणसंभ्रमपरिभ्रष्टच्छत्रधरतया छत्रीकृतेन नवपल्लवेन निवार्यमाणातपः, विविधवनलता कुसुमरेणुधूसरो वसन्त इव विग्रहवान्, अश्वखुररजोमलिनललाटाभिव्यक्ताविदातस्वदलेखः, दूरविच्छिन्नेन पदातिपरिजनेन शून्यीकृतपुरोभागः,

प्रजवितुरङ्गमाधिरूढैरल्पावशिष्टैः सहराजपुत्रैः 'एवं मृगपतिः, एवं वराहः, एवं महिषः, एवं शरभः, एवं हरिणः' इति तमेव मृगया वृत्तान्तमुच्चारयन् स्वभवनमाजगाम। उत्तीर्य च तुरङ्गमात् ससंभ्रमप्रधावितपरिजनोपनीत उपविश्यासने वारवाणमवतार्य अपनीय चाशेषं तुरङ्गमाधिरोहणोचितवेषपरिग्रहमितस्ततः प्रचलिततालवृन्तपवनापनीयमान—श्रमो मुहूर्तं विशश्राम। विश्रम्य च मणिरजतकनककलशशतसनाथामन्तर्विन्यस्तकाञ्चनपीठां स्नानभूमिमगात्। निर्वर्तिताभिषेकस्यास्य च विविक्तवसनपरिमृष्टवपुषः स्वच्छदुकूलपल्लवाकलितमौलेर्गृहीतवाससः कृतदेवार्चनस्याङ्गरागभूमौ समुपविष्टस्य राज्ञा विसर्जिता महाप्रतीहाराधिष्ठिता राजकुलपरिचारिकाः कुलवर्धनासनाथाश्च विलासवतीदास्यः सर्वान्तःपुरप्रेषिताश्चान्तःपुरपरिचारिकाः पटलकविनिहितानि विविधान्याभरणानि माल्यान्यङ्गरागान्वासांसि चादाय पुरतस्तस्योपतस्थुरुपनिन्युश्च। यथाक्रममादाय च ताभ्यः प्रथमं स्वयमुपलिप्य वैशम्पायनमुपरचिताङ्गरागो दत्त्वा च समीपवर्तिभ्यो यथार्हमाभरणवसनाङ्गरागकुसुमानि विचित्रमणिभाजनसहस्रसारं शारदमम्बरतलमिव स्फुरिततारागणमाहारमण्डपमगच्छत्। तत्र च द्विगुणितकुशासनोपविष्टसमीपोपविष्टेन तद्गुणोपवर्णनपरेण वैशम्पायनेन यथार्हं भूमिभागोपवेशितेन राजपुत्रलोकेन 'इदमस्मै दीयताम्' 'इदमस्मै दीयताम्' इति प्रसादविशेषदर्शन—वर्धितसेवारसेन च सहाहारविधिमकरोत्। उपस्पृश्य च गृहीत—ताम्बूलस्तस्मिन् मुहूर्तमिव स्थित्वेन्द्रायुधसमीपमगमत्। तत्र चानुपविष्ट एव तद्गुणोपवर्णनप्रायालापाः कथाः कृत्वा सत्वरपादातप्रतीक्षणोन्मुखे पार्श्वपरिवर्तिनि परिजने तद्गुणहृतहृदयः स्वयमेवेन्द्रायुधस्य पुरो यवसमाकीर्य निर्गत्य राजकुलमयासीत्। तेनैव च क्रमेणावलोक्य राजानमागत्य निशामनैषीत्।

द्वितीयं उद्धरणं गीतातः ( शांकरभाष्यम् ) दीयते-

"अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ ११ ॥

व्याख्या—न शोच्या अशोच्याः शोचितुमनर्हाः भीष्मद्रोणादयस्तानशोच्यानेव त्वमन्वशोचः एतानुद्दिश्य शोकं कृतवानसि। ननु स्वजनमरणे सर्वेषां शोको जायत एव कथमुच्यत एतानन्वशोचस्त्वमिति, कुतो वा म्रियमाणानामेतेषामशोच्यत्वमिति चेत्त्वमत्र प्रष्टव्यः, किं भीष्मद्रोणादि शब्दवाच्यार्थमुद्दिश्य शोच्यते उत लक्ष्यार्थमिति। आद्ये भीष्मादिशब्दवाच्यार्थस्यासद्भूतत्वमवेक्ष्य शोच्यते किंवा तन्नाशमुद्दिश्य शोच्यते इति। नाद्यः। ते महानुभावा इति त्वयैव तन्महत्वप्रतिपादनात्। न द्वितीयः। तदसम्भवात्। 'मघवन् मर्त्यं वा इदं शरीरमात्तं मृत्युना' इति शरीरस्य मृत्युग्रस्तत्वश्रवणात् 'दुर्लभो मानुषो देहो देहिनां क्षणभङ्गुरः' इति देहस्य नश्वरत्वश्रवणात् सर्वदा म्रियमाणप्राणिसंदर्शनाच्च प्रत्यक्षादिप्रमाणैरेव ध्रुवमृत्युकस्य देहादेः शोच्यत्वं न संभवति। न प्रथमे द्वितीयः। आत्माऽजत्वान्न जायते जननाभावान्न म्रियते मरणाभावान्नित्यः 'अजो नित्यः शाश्वतः' इति 'नित्यो नित्यानाम्' इतिलक्ष्यार्थस्यात्मनो नित्यत्वश्रवणान्नित्यस्य सद्रूपस्यात्मनः शोच्यत्वाऽनुपपत्तेः। नहि बुद्धिमतां नित्यः पदार्थः शोच्यो भवति नाप्यनित्यश्च। यत एवं वाच्यार्थस्य लक्ष्यार्थस्य चोभयोरशोच्यत्वे सिद्धे त्वमशोच्यानेव शोच्यत्वबुद्ध्या मूढवदनुशोचसि। नैतन्मात्रमेव करोषि, अपितु. प्रज्ञावादांश्च भाषसे सदसत्पदार्थस्वरूपं विविच्य ये प्रकर्षेण जानन्ति ते प्राज्ञाः पण्डितास्तेषां शास्त्रमभिव्याप्ताः वादा अवादास्तान् प्रज्ञावादान् 'कुलक्षये प्रणश्यन्ति कुलधर्माः' इति, 'उत्सन्न कुलधर्माणाम्' इति, 'कथं भीष्ममहं संख्ये', इत्यादीनि प्रौढवचनान्यपि भाषसे।

यद्शोऽयकथन, यच्च शास्त्रार्थप्रकटनपाण्डित्य तद्देतद् द्वय तेजस्तिमिरवत्परस्परविरुद्ध नैकत्र स्थातुमर्हति। अतो भवान् मूढ एव भवति न तु पण्डित। तर्हीव समये पण्डिता कथ यतन्त इत्याह गतासूनिति। केवल मूढा ममते पुत्रादयो मृता इति गता सूनेवानुशोचन्ति न त्वगतासून्। शास्त्रज्ञास्तु मन्ते पुत्रादयो मूढा दुर्भगा दुर्वृत्ता जाता इत्यगतासूनेवानुशोचन्ति न तु गतासून्। पण्डितास्तु गतासूनगतासूश्च पुत्रादीनानुशोचन्ति। गतासूना-मगतासूनामप्युभयेषामविद्याकार्यत्वेनस्वप्नार्थवद सत्त्वादुभयत्र—ब्रह्मैव पश्यन्ति त एव हि पण्डिता य त्जसत्यक्त्वा सदेव गृह्णन्ति। सदा सर्वत्र ब्रह्मदर्शन हि पाण्डित्यम्। 'ब्राह्मण पाण्डित्य निर्विद्य' इति श्रुत। अत उक्तलक्षणाभावात् त्व मूढ एव न तु पण्डित इत्यर्थ ॥ ११ ॥

व्याख्या १— अत्र द्वे उद्धरणे दत्ते, एक कादम्बरीत द्वितीय गीताया शाङ्करभाष्यत (शङ्करानन्दीव्याख्या) कादम्बरी' उद्धरणान् इद सहजतया सिद्ध भविष्यति यत्कीदृशी कठिनतमा भाषा लिखिता तस्या लेखकेन। एतादृशी कठिनभाषा सस्कृतस्य साधारणजनाना च द्वितीय न विद्यते। तत्र केवल दुर्बोधत्व गुण पाण्डित्यप्रदर्शनाय। कतिपयपण्डिता ता कादम्बरीं अवबोधये यु पर सामान्यपुरुषाणा कृते तु तस्या ज्ञान दुर्लभम्। वस्तुत पण्डिता अपि कथयन्ति यत् स्थले स्थले 'कादम्बरी' तथा कृते अपि कठिना दुर्बोधा, तदा का कथा बालकाना विद्यार्थिना च। अत्र पाण्डित्य तु प्रचुरमात्राया अवलोक्यते। दीर्घसमासा अत्र विद्यन्ते तथा उपमादियुतानि वाक्यानि अवलोक्यन्ते, यानि प्राय पृष्ठैकपृष्ठे समायान्ति। कदापि कदापि वाक्यस्य विविधपदाना सम्बन्ध अपि सुस्पष्ट न भवति दुर्बोधत्वात्। कदापि कदापि इद अपि न ज्ञायते यत् क्रिया कुत्र विद्यते तथा तस्या कर्ता क अस्ति कर्म किं अस्ति,

जायते, उच्यते, अनुअशोचः पदानि सन्धिकारणात् 'शोको जायत, उच्यत, अन्वशोचस् सन्धौ भविष्यन्ति। यत्र बुधाः, पण्डिताः अपि त्रुटिं कुर्वन्ति, तत्र का कथा बालकानां प्रारम्भिक-विद्यार्थिनाम्। ते कथं शोको, शोकः, जायते, जायतः, उच्यते उच्यतः अन्वशोचस्, अनु अशोचः इत्यादिषु पदेषु भेदं कर्तुं शक्नुवन्ति। द्वितीयं 'लघुत्वं' अपि सन्धौ सर्वत्र न आगच्छति। यथा 'शोकः' लघुत्व प्रकटयति नतु 'शोको' दीर्घस्वरकारणात्। द्वितीयं 'शोको' पदं नास्ति, शोकः आस्ति। एकपदे तु सन्धिः, संयोगः वा भवतु, परं एकवाक्यस्य विविधपदेषु सन्धिः संयोगः सर्वथा अनर्थकरः व्याकरणासम्मतः। वाक्येषु यदि विविध-पदानि विरूपतां ग्रहीष्यन्ति तदा 'शुद्धोच्चारणं' अपि भवितुं न अर्हति। सुस्पष्टतया इदं निवेदनं कृतं अस्माभिः यत् एकपदे सन्धिः संयोगः वा भवतु। एकः मध्यकालीनः श्लोकः (यस्मिन् काले संस्कृतं अत्यन्तं कठिनं सञ्जातम्) दीयते।

"सन्धिरेकपदे नित्यो नित्यो धातूपसर्गयोः।
सूत्रेष्वपि नित्यः स च अन्यत्र विभाषितः॥"

सन्धिः एकपदे नित्यः स्यात् एवमेव धातूपसर्गयोः नित्यः स्यात्, परं वाक्ये स वस्तुतः विवक्षां अपि न अपेक्षते। सूत्रेषु अद्य कश्चित् अपि न लिखति, अतएव तस्य प्रश्नः न उपातिष्ठते। अस्माकं निवेदनस्य अयं आशयः यत् सन्धिः एकपदे नित्यः भवतु, एव-मेव धातूपसर्गयोः। सूत्रेषु अपि स नित्यः भवतु, परं संस्कृत-व्याकरणानुसारं स वाक्ये विभाषितः नास्ति। प्रायः विद्वांसः कथयन्ति यत् वाक्ये सन्धिः विवक्षां अपेक्षते अर्थात् क्रियते न वा, परं अस्माकं मते स कदापि भवितुं न अर्हति। मन्येत चेत्

तदा स सन्धिः किं रूपः स्यात् तत् एव अहं यथास्थानं निवेदयिष्यामि।

वेदे धातूपसर्गयोः सन्धिः सर्वत्र न अवलोक्यते यथा—

व्यवहिताश्च १।४।८१

अस्य उदाहरणं दीयते—

हरिभ्यां याह्योक आ। 'आ मन्द्रैरिन्द्र हरिभिर्याहि।' भगवतः वेदस्य अस्मिन् उदाहरणे धातूपसर्गयोः सन्धिः न अवलोक्यते, तथा उपसर्गः अग्रे परे वा आगन्तुं शक्नोति। अनेन सिद्ध्यति यत् लोके अपि सन्धिः एकपदे एवमेव धातूपसर्गयोः वैकल्पिकः इच्छाधीनः वा भवितुं अर्हति न नित्यः। अस्मिन् विषये अहं पूर्ण-विवरणं यथास्थानं आगामि-पृष्ठेषु प्रदास्यामि।

मध्यकालिक-संस्कृतस्य द्वे उदाहरणे दत्ते अस्माभिः वर्तमान काले कीदृशं संस्कृतं लिख्यते सुधारवादिभिः तथा मध्यकालीन संस्कृतपक्षपातिभिः तस्य अपि द्वे उदाहरणे दीयेते 'संस्कृतम्' पत्रात् तथा 'संस्कृत-रत्नाकरः' पत्रात् च—

संस्कृतम् अयोध्या

(ता. ८-२-१९४९ ई)

(अ) उत्कटाभिलाषा

गताङ्के अस्माकं पाठकैः पश्चिमीयवङ्ग गवर्नराणां परमादरणीय डा० श्री पं० कैलाशनाथ काटजूमहोदयानां नागपुरविश्व-विद्यालय दीक्षान्तभाषणे संस्कृतराष्ट्रभाषात्वसम्बन्धिनो विचारा अधीता एव। श्री काटजू महोदया वदन्ति—

"अथ राष्ट्रभाषास्थाने अंग्रेजी न स्थातुं शक्नोति" इति इयं महती वार्ता तेनैव वक्तुं शक्यते यः संस्कृतभाषायाः शक्तौ

इत्यादयः दोषाः गुणाः वा सर्वत्र प्राप्यन्ते। एतादृशायाः काठिन-तायाः अन्यत् अपि कारणं अक्षि-लक्ष्यी भवति। वाक्येषु सन्धि-प्रयोगः भाषा-काठिन्यं वर्द्धयति। पूर्वं निवेदितं अस्माभिः यत् भाषा सुबोधाय भवति न तु दुर्बोधाय, दुर्बोधाय भवेत् चेत् तदा मौनं वरम्। वस्तुनः भाषा विचारविनिमयाय भवति। यदि एतादृशी भाषा स्यात् येन विचारविनिमयः कठिनः असम्भवः वा स्यात् ,तदा अस्याः भाषायाः कः लाभः। प्रथमं तु यदा पदानां अर्थः सुस्पष्टः न भवति तदा कथं वाक्यस्य ?। दीर्घसमासाः सन्धियुतानि पदानि दुर्बोधाय एव भवन्ति। यदि पृथक् पदानां अर्थः स्फुटः न सञ्जायते तदा वाक्यस्य अर्थः कथं स्पष्टः भवितु अर्हति। प्रथमं तु पदानां पदच्छेदः अङ्कगणितस्य रेखागणितस्य वा एकः जटिलतरः प्रश्नः विद्यते। वस्तुतः विचारस्य मूल्यं न तु भाषायाः। ज्ञानविज्ञानं किम्? अस्य उत्तरं अस्ति 'सुविचाराः'। यदि लेखकस्य 'सुविचाराः' 'सद्विचाराः' वा सुस्पष्टाः न स्युः तदा कः लाभः लेखनस्य। अतएव कादम्बरीतः अयं उपदेशः मिलति यत् समासाः सरलतराः स्युः, एवमेव वाक्यानि अपि। समासाः अधिकादधिकं द्वित्रिपदयुताः स्युः। वाक्यस्य विविधपदेषु सन्धिः कदापि न स्यात्। अनेन मार्गेण सारल्यं आगन्तुं शक्नोति।

व्याख्या २—गीतायाः शाङ्करभाष्यविषये अहं केवलं इदं निवेदयामि यत् भाष्यं मूलगीतातः कठिनं विद्यते। तदा कः लाभः एतादृशायाः व्याख्यायाः। तत् भाष्यं पाण्डित्यपूर्णं भवतु परं सामान्यजनानां किं हितम्? अतएव सरलतमेन संस्कृतेन भवितव्यम्, येन आशयः सुस्पष्टः भवेत्। मूलग्रन्थस्य टीका तु सरलतरा भवितव्या। परं अत्र इदं न अवलोक्यते। मूलश्लोकः वस्तुतः कठिनः नास्ति। गीतायाः विचाराः 'गम्भीराः

परं भाषा सरला सुबोधा च । तस्य ग्रन्थस्य अयं महागुणः । परं तस्य श्लोकस्य टीका अवलोकनीया । तत्र पाण्डित्यं तु प्रचुरमात्रायां अवलोकयते परं अर्थ-सारल्यं न दृश्यते । वस्तुतः टीकां पठित्वा कश्चित् जनः संशये पतितुं शक्नोति। तां पठित्वा अनेके संशयाः हृदये उत्पन्नाः भवन्ति, येषां निवारणं तत्र न भवति । मूलश्लोकस्य अथ पदच्छेदः 'त्वं अशोच्यान् अनुअशोचः ( त्वं ) प्रज्ञावादान् च भाषसे । पण्डिताः गतासून् अगतासून् च न अनुशोचन्ति ।' सर्वं सुस्पष्टं एव ।

व्याख्या ३ —कादम्बरीतः उद्धरणं पठित्वा कश्चित् अपि ज्ञातुं शक्नोति यत् तत्र दीर्घतमाः समासाः विद्यन्ते, येषां अर्थकरणं अपि दुष्करम् । यत्र समासाः न तिष्ठन्ति तत्र वाक्यपदेषु संहिता कृता, येन वर्णनातीतं काठिन्यं उत्पादितम् । अनेन प्रथमं तु दीर्घकाल पदच्छेदे व्ययित भवति, तदुपरि सन्धौ अर्थात् "स्वर-संहितायाम्" एवमेव 'हलक्षराणां सयोगे" पदेषु विविध स्वराणां तथा हलक्षराणां सम्यक् ज्ञानं न जायते । यथा 'आ' 'अ' 'अ' 'आ' वा 'इ' 'ई' 'इ' 'ई' वा एवमेव अन्येषां वर्णानां संहिताकरणे एकरूपत्वात् इदं ज्ञातं न भवति यत् कस्मिन् पदे कः वर्णः आस्ति । इदं सर्वं तु सुस्पष्टं एव सर्वे विद्वांसः सरलतया अवबोधयितुं शक्नुवन्ति । परं अहं कतिपयोदाहरणानि अपि ददामि । गीताश्लोकस्य व्याख्यायां 'न शोच्या अशोच्याः शोचितुमनर्हाः....' अत्र वस्तुतः 'शोच्याः' ( पु॰ बहुवचनं ) पदं विद्यते, परं सन्धिकारणात् अत्र 'शोच्या 'पद दत्तम् । 'शोच्या' शब्दः स्त्रीलिङ्गः ( एकवचन ) अपि भवितुं अर्हति यथा 'इयं स्थितिः शोच्या' । अत्र एकं वाक्यं दीयते 'ननु स्वजनमरणे सर्वेषां शोको जायते- एव कथमुच्यते एतानन्वशोचस्त्वमिति' । अस्मिन् वाक्ये, विविधपदानि विरूपतां गतानि सन्ति । 'शोकः,

जायते, उच्यते, अनुअशोचः पदानि सन्धिकारणात् 'शोको जायत, उच्यत, अन्वशोचस् सन्धौ भविष्यन्ति। यत्र बुधाः, पण्डिताः अपि त्रुटिं कुर्वन्ति, तत्र का कथा बालकानां प्रारम्भिक-विद्यार्थिनाम्। ते कथं शोको, शोकः, जायते, जायतः, उच्यते उच्यत; अन्वशोचस्, अनु अशोचः इत्यादिषु पदेषु भेदं कर्तुं शक्नुवन्ति। द्वितीयं 'लघुत्वं' अपि सन्धौ सर्वत्र न आगच्छति। यथा 'शोकः' लघुत्व प्रकटयति नतु 'शोको' दीर्घस्वरकारणात्। द्वितीयं 'शोको' पदं नास्ति, शोकः अस्ति। एकपदे तु सन्धिः, संयोगः वा भवतु, परं एकवाक्यस्य विविधपदेषु सन्धिः संयोगः सर्वथा अनर्थकरः व्याकरणासम्मतः। वाक्येषु यदि विविध-पदानि विरूपतां ग्रहीष्यन्ति तदा 'शुद्धोच्चारणं' अपि भवितुं न अर्हति। सुस्पष्टतया इदं निवेदनं कृतं अस्माभिः यत् एकपदे सन्धिः संयोगः वा भवतु। एकः मध्यकालीनः श्लोकः (यस्मिन् काले संस्कृतं अत्यन्तं कठिनं सञ्जातम्) दीयते।

"सन्धिरेकपदे नित्यो नित्यो धातूपसर्गयोः।
सूत्रेष्वपि नित्यः स च अन्यत्र विभाषितः॥"

सन्धिः एकपदे नित्यः स्यात् एवमेव धातूपसर्गयोः नित्यः स्यात्, परं वाक्ये स वस्तुतः विवक्षां अपि न अपेक्षते। सूत्रेषु अद्य काश्चित् अपि न लिखति, अतएव तस्य प्रश्नः न उपतिष्ठते। अस्माकं निवेदनस्य अयं आशयः यत् सन्धिः एकपदे नित्यः भवतु, एव-मेव धातूपसर्गयोः। सूत्रेषु अपि स नित्यः भवतु, परं संस्कृत-व्याकरणानुसारं स वाक्ये विभाषितः नास्ति। प्रायः विद्वांसः कथयन्ति यत् वाक्ये सन्धिः विवक्षां अपेक्षते अर्थात् क्रियते न वा, परं अस्माकं मते स कदापि भवितुं न अर्हति। मन्येत चेत्

तदा स सन्धि कि रूपः स्यात् तत् एव अहं यथास्थानं निवेदयिष्यामि।

वेदे धातूपसर्गयोः सन्धिः सर्वत्र न अवलोक्यते यथा—

व्यवहिताश्च १।४।८२

अस्य उदाहरणं दीयते—

हरिभ्यां यह्योक आ। 'आ मन्द्रैरिन्द्र हरिभिर्याहि।' भगवतः वेदस्य अस्मिन् उदाहरणे धातूपसर्गयो सन्धिः न अवलोक्यते, तथा उपसर्गः अग्रे परे वा आगन्तु शक्नोति। अनेन सिद्ध्यति यत् लोके अपि सन्धिः एकपदे एवमेव धातूपसर्गयोः वैकल्पिक इच्छाधीनः वा भवितु अर्हति न नित्यः। अस्मिन् विषये अह पूर्ण-विवरणं यथास्थान आगामि-पृष्ठेषु प्रदास्यामि।

मध्यकालिक-संस्कृतस्य द्वे उदाहरणे दत्ते अस्माभि। वर्त्तमान काले कीदृशं संस्कृतं लिख्यते सुधारवादिभिः तथा मध्यकालीन संस्कृतपक्षपातिभिः तस्य अपि द्वे उदाहरणे दीयेते 'सस्कृतम्' पत्रात् तथा 'सस्कृत-रत्नाकर' पत्रात् च—

सस्कृतम् अयोध्या

(ता. ८-२-१९४९ ई)

(अ) उत्कटाभिलाषा

गताङ्के अस्माकं पाठकैः पश्चिमीयवङ्ग गवर्नराणां परमादरणीय डा० श्री पं० कैलाशनाथ काटजूमहोदयानां नागपुरविश्व-विद्यालय दीक्षान्तभाषणे सस्कृतराष्ट्रभाषात्वसम्बन्धिनो विचारा अधीता एव। श्री काटजू महोदया वदन्ति—

"अथ राष्ट्रभाषास्थाने अंग्रेजी न स्थातुं शक्नोति" इति एवं महती वार्ता तेनैव वक्तुं शक्यते यः सस्कृतभाषायाः शक्ती

सम्पूर्णं विश्वासं करोति, यः पूर्णरूपेण भारतीयो भारतस्य सत्यं स्वरूपं पश्यति, यस्मिन् वर्तमानजगतो वातावरणं नाल्पमपि प्रभावं उत्पादयति, यश्च पर्वत इवाचलः, समुद्र इव गम्भीरः, धरित्रीव क्षमावान्। काममंग्रेज्यां विधाननिर्माणेन संस्कृत-भाषाया अतुलमभूदपमानं, परं तदन्तिममिति धिया भाविनं संस्कृतोत्कर्षमवलोकयन्ति ये विवेकिनस्तेषु श्री काटजू महोदयानामभिनन्दनीयं स्थानमिति। सत्यमेव अंग्रेज्या राष्ट्रभाषात्वेन स्थितिर्जगद्गुरोर्भारतस्य मस्तके कलङ्क एव। भारतमेनं कलङ्कं क्षालयिष्यत्येवेति श्री काटजूमहोदयानां कथनात् सुस्पष्टमभूत्। एतेनेदमपि सिद्ध्यति यदस्माकं भारत सरकारोऽप्यंग्रेज्या राष्ट्रभाषात्वमेतदपहर्तुमिच्छति।

प्रश्नोऽयमुदेति यदंग्रेजीसदृशीं व्यापकं भाषां परित्यज्य भारतं कस्या भाषाया राष्ट्रभाषात्वमङ्गीकुर्यादिति ? एतदुत्तरं श्री काटजू महोदया ददति—

"शासका यस्या भाषायाः प्रचाराय यतन्ते सा राष्ट्रभाषा भवति। सरकाराः शीघ्रातिशीघ्रं संस्कृतभाषां व्यवहरेयुः" इति।

'राजा कालस्य कारणम्' इत्युक्तिरुक्तवाक्यस्य पूर्वभागमवश्यं समर्थयते। सरकारः क्षणेनैव संस्कृतमुन्नेतुं शक्नोति, परं कालकारणस्य अर्थात् कालजनकस्य राज्ञः कारणं प्रजा, अतः सा यस्या भाषायाः प्रचाराय यतते सा राष्ट्रभाषा भवतीत्येकं मतम्। सैव संस्कृतं व्यवहृत्य शीघ्रातिशीघ्रं राष्ट्रभाषां विदध्यादिति कथनमुचितं प्रतीयते। समस्तभारतीयाः संस्कृतराष्ट्रभाषात्वायैकस्वरा यदि भवेयुस्तर्हि सरकारोऽपिताननुकरिष्यति। गतदिने हैदराबादे माननीय पं० जवाहरलालेनोक्तमासीत्—

"हिन्दीचन्त इत्थं प्रचारयन्ति येन परिज्ञायते यद्राष्ट्रभाषात्व-निर्माणं सरकारायत्तम्। तेषां बुद्धौ नैतत्प्रविशति यद् राष्ट्रभाषा-निर्माणं प्रजायत्तं, भाषायोग्यतायत्तञ्च"।

एतस्मादेव कारणादुच्यते यत्पठितप्रजाया मनस्सु संस्कृतविजय आवश्यकः। राष्ट्रभाषात्व प्रश्ने साधारणजनताया आवश्यकता नास्ति मतग्रहणस्य, आपणभाषया मोहमुग्धायाः।

सौजन्यमूर्तय परमादरणीय श्री काटजूमहोदया राजशक्तेः समुचितं सम्मानं कुर्वन्ति शीघ्रं भारतस्य सत्स्वरूपमानेतुम्। तेषामिच्छा विना विलम्बं संस्कृतमुन्नीय भारत-भारती-भारतीय-भारतीयतानां रक्षणस्यास्ति। एतस्मादेव कारणात् पुनस्तामेवोक्तिं दृढयन्ति अन्तिमे भागे भाषणस्य—

"यदि विभिन्नप्रान्तेभ्यो विभिन्न भाषाणामुरीकरणाय अवसरो दत्तस्तर्हि राष्ट्रभाषानिर्माणकार्यमतिकठिनं सम्पत्स्यते। वयमनुरुन्ध्महे सरकारान् भारतस्य राष्ट्रभाषापदे संस्कृतं स्थापयितुम्" इति। एतस्मिन् समये सर्वेषु प्रान्तेषु तेषां प्रधाना भाषा राज-भाषात्वेनाङ्गीक्रियते। यथा युक्तप्रान्ते हिन्दी, वङ्गोत्कलासामादिषु वङ्गलोड़ियासामीत्यादयः। अथ श्री काटजू महोदयानां हृदये भीतिर्यदनेकराजभाषाणामुपस्थितौ तु संस्कृत-प्रश्नो विलयं यातुमर्हतीति, अतएव पुनः सरकारस्तैः संस्कृतस्य राष्ट्रभाषात्वसम्पादनायानुरुध्यते, परं प्रान्तीयभाषाणां राजभाषात्वे सत्येव तासां समन्वयमापादयिष्यति संस्कृतम-तस्तस्यैव राष्ट्रभाषात्वं सुदृढम्। अत्रायं प्रश्नः सम्भवो यद्राज-भाषात्वमापन्नास्ताः स्वरूपे न स्थास्यन्ति, भारतञ्च विकृताकारं भविष्यतीति संस्कृतं न त्यक्तुं शक्यते।

संस्कृतस्य राष्ट्रभाषात्वसम्बन्धे नेतारश्च सुस्पष्टं भाषणमितः

पूर्वं कदाचिन्माननीय श्री काटजूमहोदयैरकारि। एतेन तेषां संस्कृतस्य राष्ट्रभाषात्वाय कीदृशी उत्कटाभिलाषा इति निर्विकल्पं ज्ञायते। श्री दुर्गाम्बा तेषामिमामभिलाषामवश्यं पूरयिष्यति। वयं तु श्री काटजूमहोदयेभ्यो धन्यवादानेव समर्प्य कृतकृत्या भवामः।

( संस्कृत-रत्नाकरः, फरवरी १९४९ )

( आ ) संस्कृतभाषाया विश्वव्यापकं महत्त्वम्

( पं. श्री. गोपाल नारायण पारीक एम० ए० महोदयः 'सुपरिण्टेण्डेन्ट' पेलस लाइब्रेरी, जयपुर )

[ संस्कृतभाषयैव भारतवर्षस्य सर्वतोमुखं गौरवं भूमण्डले स्थापितम्। वराका आङ्ग्लभाषाशिक्षिता अद्य तादिदं विस्मृतवन्तः किन्तु स्वयं पाश्चात्या एव तादिदं स्वीचक्रुः स्वीकुर्वन्ति चेति स्थाने स्थाने मया स्वनिबन्धेषूद्घोषितम्। अद्य पैरिस विश्वविद्यालयस्य विदुषो मुखात्पुनराकर्ण्यतां नवीनाशिक्षितैरिति। प्रधानसंपादकः ]

चिदम्बरे अनामली विश्वविद्यालयस्याधिवेशनावसरे पाश्चात्यदेशेषु संस्कृताध्ययनस्यावश्यकताविषये भाषमाणैः पैरिसविश्वविद्यालयस्य संस्कृत-महाध्यापकैः लुई रेनो ( Louis Renoa ) महाभागैरुद्घोषितं यत् संसारे भारतवर्षस्य ईदृशः समादरः अनेनैव कारणेन अस्ति, यत् संस्कृतसाहित्यभाण्डागारे अस्य देशस्य पुरातनी सम्मानयोग्या च नैतिकपरम्परा सुरक्षिता वर्तते।

अत्र तेषु तेषु प्रान्तेषु तामिल-बङ्गाली-महाराष्ट्रीप्रभृतीनां विविध-प्रान्तीयभाषाणां महत्त्वमविगणय्यापि एतत् स्पष्टं वक्तुं शक्यते यत् सर्वासु भाषासु या अनन्यसाधारणी विषय-विवेचनशैली दृश्यते यया च नासां स्वरूपरचनाऽऽविरभूत् मुहुरपि यया

विभिन्नप्रान्तनिवासिनां भारतीयानामैक्यं सिद्ध्यति सा तु ताभिः संस्कृतभाषातः एव प्राप्ता न तु नान्यतः।

उत्तरीय भारतीयाः हिन्दीभाषां राष्ट्रभाषापदासीनां कर्तुं बद्धपरिकराः सन्ति। दाक्षिणात्यैश्च एतन्न मन्यते। एतत्समीचीनं, न वा अत्र वक्तुं न शक्यते। किन्तु यदि भवन्तो हिन्दीं स्वीकर्तुं नेच्छुकाः सन्ति, तर्हि संस्कृतस्यैव स्थितिर्दृढीकरणीया। यतः।

संस्कृतभाषा मुस्लिमादि-वैदेशिक प्रभावतः अक्षुण्णा शुद्धा च वर्तते। संस्कृतमेव काश्मीरतः कन्याकुमारीपर्यन्तमस्य देशस्य सांस्कृतिकी भाषा भवितुं शक्नोति। संस्कृतभाषा न केवलं भारतवर्षस्य, अपि तु एशियामहाद्वीपस्य सर्वोत्कृष्टा भाषा अस्ति। एतत्तु विदन्त्येव तत्र भवन्तः यत् अस्याः भाषायाः संस्कृति-प्रसारः अफगानिस्तान-तिब्बत-चीन-जापानपर्यन्तं बौद्धधर्मेण जात एव।

× × ×

( ङ ) संस्कृत-रत्नाकरतः "संवादाः संपादकाभिभाषाश्च"

भारत 'गवर्नरः' श्रीराजगोपालाचार्यमहोदयः ता॰ १७ फर्वरी दिने जयपुरनगरेऽस्मिन् पदार्पणमकरोत्। महाभागस्यास्य प्राचीनैतिहासिकेऽस्मिन् नगरे तदिदं प्रथममागमनम्। नागरिकैर्व्यधायि सोत्साहमस्य स्वागतम्। सायं रामनिवासोद्यान-हर्म्यस्याग्रभागे जयपुर नागरिकसभया (म्यूनिसिपिलटी) व्यतीर्यतास्मै संमानपत्रम्। एतस्योत्तरे समभाषि महाभागेन साम्प्रतमेव यन्मानपत्रं पठितं तस्मिन्नस्य नगरस्यैतिहासिकं महत्त्वं सुभृशमघोष्यत। किन्तु भूतकालिकस्य गौरवस्योद्घोषणमात्रं न तावत्पर्याप्तम्। यावत्कालं वयं वर्तमानकाले कर्त्तव्य-परायणा न भवेम, तावत्प्रगतिं न शक्नुमः प्राप्तुम्। शीघ्रमेव नगरमिदं सम्पूर्णराजस्थानस्य प्रमुखं केन्द्रं भविता। यथैतच्छा-

सकस्य महाराजाधिराजस्य संमुखे महद्भविष्यत् तथा नगरस्य तन्निवासिजनतायाश्चापि संमुखे महत्त्वपूर्णं भविष्यदस्ति। भारतस्य नवनिर्माणे जयपुरस्य महत्त्वपूर्णं स्थानम्। आचिरादेव च तदिदं नगरं प्राक्कालिकं स्वीयं गौरवं प्राप्नुयात्।

नगरे सिंहदुर्गे च (नाहरगढ) विद्युत्प्रदीपैर्महतीं प्रकाशलेखां समपाद्यत यया नगरस्यास्य सौन्दर्यमभूद्वर्णनातिशायि। लार्ड महोदयस्यागमने यादृक् संभाराः पुरा राजतन्त्रद्वाराऽभवंस्तादृशा एव साम्प्रतमपि समायोज्यन्त।

× × ×

(ई) राजपूताना विश्वविद्यालयस्य शिलान्यासः—

राजगोपालचार्यमहोदयद्वारा प्रातः सार्द्धदशवादने राष्ट्रीय महासभायाः (कांग्रेस) ऐतिहासिकाधिवेशनस्य स्थले मौक्तिक पर्वतिकाया अधित्यकायां राजपूतानाविश्वविद्यालय-भवनस्य शिलान्यासः समभूत्। विश्वविद्यालयं स्थापयन्नयं स्वयं स्वभाषणे गर्वमन्वभूत्। व्याख्याच्च यत् विगतवर्षेषु यानि महान्ति परिवर्तनान्यभूवन् तेषु प्रमुखराजस्थानानामेकीकरणं सर्वतः प्रमुखभूतं येन द्येतन्निवासिनामाचारा व्यवहाराश्च चरमामुन्नतिं संस्पृशेयुः। अस्माकं संस्कृतावुच्चकोटेः समन्वयस्य शक्तिः, यस्या आदर्शः, उदाहरणं च जयपुरस्य कलायां साहित्ये, प्रात्यहिक जीवने आचारे व्यवहारे च प्रत्यक्षं समवाप्यते। मध्यकाले यावत्या शीघ्रतया मोगलसंस्कृतिः स्वीकृताऽभूत् तावत्यैव शीघ्रतया आधुनिकताऽपि समभूदङ्गीकृता। चेदस्मिन् काचिन्न्यूनता संभवेत्तर्हि सा शिक्षाया यत् किञ्चिन्न्यूनतायाः कारणादेव। राजपूताना-विश्वविद्यालयः सोऽयं सर्वविद्यामेवाऽऽवश्यकतामापूरयेत्।

व्याख्या- आधुनिक-संस्कृतं कीदृशं तस्य उदाहरणानि दत्तानि। इदं तु सत्यं अस्ति यत् मध्यकालिक संस्कृतस्य अपेक्षया

तत्तु सरलं अस्ति, पर तत् अपि जटिलं अस्ति सन्धिकारणात्। इदं कथ्यते विद्वद्भिः यत् इतिहासस्य कथितमध्यकाले प्राय सर्वेषु देशेषु तत्तत् देशीया भाषा जटिला अवलोक्यन्ते स्म यथा तत्कालीना आङ्ग्लभाषा जटिला आसीत्। तत् भवतु पर संस्कृतस्य जटिलतायाः अन्यानि अपि कारणानि सन्ति। अहं मन्ये यत् 'संस्कृतम्' पत्रस्य भाषा 'संस्कृत रत्नाकरतः' सरला परं जटिलता तत्र अपि विद्यते।

## वाक्येषु संहितायाः हानयः ( लोके )

पूर्वं इदं निवेदित मया यत् वाक्येषु संस्कृतव्याकरणानुसार सन्धि भवितुं न अर्हति। न्यूनातिन्यून इदं कुत्र अपि न दृष्ट अस्ति यत् व्याकरणे वाक्ये सन्धिः भवेत्। मन्येत चेत् यथा बहवः विद्वांसः कथयन्ति यत् 'वाक्येषु सन्धिः वैकल्पिकः' तदा अस्यां दशायां अपि इच्छाधीनत्वात् तस्य प्रयोगः अकार्यः। काः काः हानय सन्ति अह अत्र ददामि—

( १ ) सर्वप्रथम तु शब्दाः विरूपतां गृह्णन्ति। विद्वांसः अपि पठनपाठने त्रुटिं कुर्वन्ति तदा का कथा बालकानां प्रारम्भिक विद्यार्थिनाम्। अहं तु अत्र कतिचित् उदाहरणानि प्रदास्यामि स्थालीपुलाकन्यायेन। 'संस्कृतम्' पत्रस्य एकः लेखः 'उत्कटाः मिलापा' प्रदत्तः। तत्र विद्यते '... संस्कृतराष्ट्रभाषात्वसम्बन्धिनो विचारा अधीता एव ' वस्तुतः 'सम्बन्धिन' 'विचाराः' 'अधीताः' शब्दाः सन्ति, पर वाक्ये सन्धिकारणात् सम्बन्धिनो, विचारा, अधीता सञ्जाताः। 'सम्बन्धिनो' शब्दः क्वचित् अपि नास्ति। एवमेव 'विचारा' अधीता पु० बहुवचने न सन्ति। 'विचारा ' शब्दः अस्ति। 'संस्कृतराष्ट्रभाषात्वसम्बन्धिन 'समास' अत्र 'विचाराः' शब्दस्य विशेषणं अस्ति। 'अधीताः' शब्दः

अत्र क्रियारूपेण 'भूतकालनिष्ठायां, विद्यते। इदं वाक्यं आस्ति 'संस्कृतराष्ट्रभाषात्वसम्बन्धिनः विचाराः अधीताः एव' इदं तु पठने अपि आगच्छति तथा सर्वे अववोधयितुं शक्नुवन्ति। वालकः अपि ज्ञातुं शक्नोति यत् 'सम्बधिनः' 'विचाराः' 'अधीताः' शब्दाः पु० वहुवचने विद्यन्ते। 'विचारा' तु संस्कृते शब्दः अपि नास्ति। 'विचारः, विचारौ, विचाराः' कर्तृकारके विद्यन्ते। 'संस्कृतभाषा अधीता मया' अस्मिन् वाक्ये 'अधीता' शब्दः स्त्रीलिङ्गः आस्ति। अनेन भ्रमः भवितुं अर्हति यत् वाक्ये 'अधीताः' शब्दः पुँल्लिङ्गः स्त्रीलिङ्गः वा। अस्मिन् एव लेखे अन्यत्र दीयते 'यः' पूर्णरूपेण भारतीयो......यश्च पर्वत इव अचलः...संस्कृत-भाषाया अतुलमभूदपमानं......इत्यादि'। 'भारतीयो' 'पर्वत' 'संस्कृत—भाषाया' इत्यादयः शब्दाः शुद्धरूपेण न विद्यन्ते। भारतीयः, पर्वतः, संस्कृतभाषायाः पदानि सन्ति, परं वाक्ये सन्धि—कारणात् विविधपदानि विरूपतां गतानि। 'अतुलमभूदपमानं' वस्तुतः 'अतुलं अभूत् अपमानं' आस्ति। प्रथमं 'अतुल-मभूदपमानं' जटिलं अस्पष्टं एव। 'अभूत्' पदं आस्ति न तु 'अभूद्' एवमेव अन्यस्थलेषु वोध्यम्।

(२) द्वितीया हानिः इयं अस्ति यत् वाक्ये सन्धिकारणात् एकपदस्य विविधानि रूपाणि भवन्ति– यथा 'एतत्' पदं अस्ति, परं संहितायां तस्य रूपाणि अनेन प्रकारेण जायन्ते।

| शब्दः | विविधरूपाणि | | उदाहरणानि |
|---|---|---|---|
| एतत् | एतद् | यथा | एतद्वाक्यम् |
| ,, | एतन् | ,, | एतन्निवेदनम् |
| ,, | एतच् | ,, | एतच्चतुष्टयम् |

| | | | |
|---|---|---|---|
| एतद् | एतट् | यथा | एतट्टङ्कितम् |
| „ | एतज् | „ | एतज्ज्ञानम् |
| „ | एतल् | „ | एतल्लिखितम् |
| „ | एतड् | „ | एतड्डमरुः |
| विसर्गस्य | ओ | „ | शिवोऽन्यः |
| (ः) | र् | „ | सर्पिरवयवः |
| „ | ष् | „ | धनुष्कपालम् |
| „ | श् | „ | हरिश्शेते |
| „ | स् | „ | रामस्तिष्ठति |
| „ | जिह्वामूलीय | „ | कᳵकरोति |
| „ | उपध्मानीयः | „ | कᳶपचति |

अ स्वरवर्णेषु तथा ह, य, व, र, ल, ञ, म, ङ, ण, न, झ, भ, घ, ढ, ध, ज, ब, ग, ड, द, एतेषु व्यञ्जनवर्णेषु परेषु अकारान्ता-त्परस्य विसर्गस्य लोपः भवति। यथा- स आगच्छति, देवा नम्या इत्यादि।

श, ष, स, वर्णेषु परेषु विसर्गस्य लोपः भवति। यथा रामं स्थाता। 'भो भगो अघो अपूर्वस्य योऽशि'। ८। ३। १७।

व्याख्या— एतत्पूर्वस्य रोः यादेशः स्यात् अशिपरे। 'लोपः शाकल्यस्य'। ८। ३। १९

व्याख्या— अवर्णपूर्वयोः पदान्तयोः यवयोः लोप वा स्यात् अशिपरे। 'खर्परे शरि वा विसर्गलोपः वक्तव्य'

अत्र केवलं द्वे उदाहरणे दीयेते येन संस्कृतस्य कठिनतायाः कारणं सुस्पष्टं भवेत्। भाषा-सारल्याय इदं आवश्यकं अस्ति यत् यथा साध्यं शब्दाः स्वरूपे तिष्ठन्तु, विरूपतां विविधरूपाणि

वा न गृह्णन्तु काठिनतायाः उत्पादनाय। वाक्येषु- सन्धि-करणे कः लाभः अहं अद्यावधि न जानामि । यदि पण्डिताः वस्तुतः इच्छान्ति यत् संस्कृतं केवलं तेषां भाषा तिष्ठेत्, तस्य सर्वत्र सर्वेषु जनेषु वा प्रचारः न भवेत् यथा अद्य प्राप्यते, तदा वाक्येषु सन्धिः भवेत्। परं यदि पण्डिताः भारतीयाः वा इच्छान्ति यत् संस्कृतं भूयः अपि देशस्य राष्ट्रभाषा अन्ताराष्ट्रिय भाषा च भवेत् पूर्ववत् तदा तस्य सारल्यं आवश्यकं अनिवार्यं च। कः बालकः 'एतत्' शब्दस्य एतानि सर्वाणि रूपाणि स्मर्तुं ज्ञातुं वा शक्नोति तथा कः लाभः एतेन। बालकेषु अनेन मार्गेण संस्कृतस्य कदापि प्रचारः न भवितुं अर्हति। प्रायः भारतीय-बालकाः संस्कृतं न पठन्ति काठिन्य-कारणात्। ते प्रायः कथयन्ति संस्कृतं अत्यन्तं कठिनम्। तेषां इदं कथनं सत्यं युक्तियुक्तं च। अद्य विद्यालय-महाविद्यालय-स्कूलकालिज विद्यार्थिषु अयं भयः सदैव तिष्ठति यत् संस्कृतं काठिनं अतएव न पठनीयम्। यावत् अयं भयः विद्यार्थिषु तिष्ठति तावत् तेषु कथं संस्कृत-प्रचारः भवितुं अर्हति। यदा ते न पठिष्यन्ति तदा देशे अपि संस्कृत-प्रचारः असम्भवः।

अतएव अद्य समयः आगतः अस्ति यत् देशस्य विद्वांसः पण्डिताः विचारयेयुः यत् केन उपायेन संस्कृते सारल्यं आगच्छेत्, तथा तस्य कृते कानि कानि संशोधनानि आवश्यकानि सन्ति। केवलं इच्छामात्रेण किं भवति? उपायेन इच्छापूर्तिः भवितुं अर्हति। अद्य पण्डिताः ईदृशं संस्कृतं भाषन्ते "श्री जवाहर-लालो वदति"। ते इदं अपि न कथयन्ति "श्री जवाहरलालः वदति।" वस्तुतः नाम अस्ति "जवाहरलाल"। 'लालो' किं अहं न जानामि? संस्कृते 'लालो' कश्चित् अपि शब्दः नास्ति। हिन्द्यां 'लालो' स्त्रीलिङ्गः भवति। द्वितीयं तस्य कथनस्य का आवश्यकता?

विशेष-नाम अपि 'विरूपतां' गच्छति। इदं विश्वस्य अन्यासु भाषासु भवितुं न अर्हति। न्यूनातिन्यूनं नामानि तु स्वरूपे तिष्ठन्तु। 'विशेषसंज्ञानाम्' विषये अर्थात् पुरुष-नगरादि नाम्नां विषये अयं नियमः कार्यः यत् ते स्वरूपे तिष्ठन्तु। वस्तुतः पूर्वं वाक्यं अनेन प्रकारेण लेखनीयं उच्चारणीयं च यथा "श्री जवाहरलाल वदति"। एकस्य नवीनसूत्रस्य रचना आवश्यकी-अर्थात् "विसर्गादर्शनम्"। व्याकरणानुसारं विसर्गस्य प्राप्तिः तु भवेत् परं लोपः मन्येत। अहं अस्मिन् सम्बन्धे पूर्णरूपेण कथयिष्यामि यथास्थानम्। अत्र तु केवलं संकेतमात्रेण निवेद्यते। विश्वस्य अन्यासु भाषासु विसर्गस्य एतावान् प्रयोगः न भवति यथा संस्कृते जायते। केन प्रकारेण विसर्गस्य प्रयोगः न्यूनतमः स्यात् इदं विचारणीयं विद्वद्भिः। अस्माकं मते तु "विसर्गादर्शनम्" सूत्रं आवश्यकं येन विसर्गस्य लोपः मन्येत। अयं व्यापकः नियमः स्यात् यः सर्वत्र लगेत् समानशब्दान् पदानि वा विहाय यथा रमः, रम, रमा, रमाः, मती, मतीः, इत्यादयः। अस्माकं मते तु द्वे सूत्रे कल्याणकरे (१) 'असंहिता वाक्ये' (२) 'विसर्गादर्शनम्'।

अन्यः मार्गः न विद्यते लौकिक-संस्कृतस्य कल्याणाय। इदं अस्माकं निश्चितं मतं अस्ति यत् यावत् संस्कृते अयं सुधारः न करिष्यते तावत् संस्कृतं कदापि व्यावहारिकी भाषा न भविष्यति, तदा का कथा तस्याः राष्ट्रभाषात्वस्य अन्ताराष्ट्रियभाषात्वस्य। सर्वे संस्कृतशुभचिन्तकाः विचारयन्तु।

अहं अस्मिन् काञ्चित् हानिं अपि न अवलोकयामि। न्यूनातिन्यूनं सर्वे संस्कृतज्ञाः मन्यन्ते यत् 'वाक्ये सन्धिः वैकल्पिकः'। अर्थात् क्रियेत न वा। मम निवेदनं इदं अस्ति। यदि सन्धिकारणात् वाक्येषु काठिनता सञ्जायते, तदा तस्य का आवश्यकता।

एवमेव अन्यानि उदाहरणानि अपि मध्य-कालिक-वर्तमान कालिक संस्कृतस्य। पाठकाः तानि उद्धरणानि पठेयुः, तथा स्वयमेव अनुभवेयुः यत्ते तानि अबाधरूपेण पठितुं शक्नुवन्ति न वा। सन्धिकारणात् क्षणे क्षणे पदानां रूपाणि परिवर्त्तन्ते। अनेन वर्णनातीतं काठिन्यं उत्पद्यते। पदानां शुद्धस्वरूपं अपि ज्ञातुं जनाः समर्थाः न भवन्ति। इदं निवेदितं मया यत् सर्वत्र नियमरूपेण सन्धि-प्रयोगेण पदच्छेदे दीर्घः समयः नष्टः भवति। अयं स्वतः एव एकः जटिलः प्रश्नः भवति। मस्तिष्के पदच्छेद-करणं आवश्यकं सञ्जायते। पठने सर्वेषां जनानां अयं उद्देशः भवति यत्ते वाक्यार्थान् शीघ्रातिशीघ्रं जानीयुः गृह्णन्तु वा। परं तत्कार्यं भवितुं न अर्हति यावत् पदच्छेदः न क्रियते। अनेन बाधा आपतति। अस्मात् कारणात् कश्चित् अपि अबाधरूपेण वाक्यानां पठनपाठनं, अर्थग्रहणं वा कर्तुं न शक्नोति। अतः वाक्येषु सन्धिः न कार्यः। अनेन शुद्धोच्चारणं अपि भवितुं न अर्हति। अशुद्धोच्चारणात् व्यर्थहास्यं भवति, अभीप्सार्थलाभः न सञ्जायते तथा भ्रमः उत्पद्यते। यथा एकस्मिन् स्थले आगच्छति,

'नमोऽद्वैततत्त्वाय मुक्तिप्रदाय'

पठने नमो द्वैत तत्त्वाय आगच्छति। श्रोतारः 'नमः द्वैततत्त्वाय' अवबोधयितुं शक्नुवन्ति न तु 'नमः अद्वैत-तत्त्वाय' यथा पुस्तके विद्यते यत् लेखकस्य अभीष्टं आस्ति। द्वितीयं सन्धौ 'नमः द्वैत-तत्त्वाय' 'नमो द्वैततत्त्वाय' भविष्यति एवमेव 'नमः अद्वैततत्त्वाय' 'नमोऽद्वैततत्त्वाय' 'नमो द्वैततत्त्वाय' (यतः अवग्रहः (ऽ) इदं चिह्नं अपि न दीयते येन 'अ' अक्षरस्य लोपः सन्धौ ज्ञातः स्यात्)। उच्चारणे भ्रमः अवश्यमेव उत्पन्नः भविष्यति, यतः सन्धौ इदं वाक्यं एकं रूपं ग्रहीष्यति। अनेन सिध्यति यत् वाक्येषु सन्धिः लोऽनर्थकरः यतः लेखकस्य अर्थः सुस्पष्टः न जायते, आपितु भ्रमः

उत्पद्यते। नहि, नहि अर्थस्य अनर्थः भवति, यथा अत्र अवलोक्यते। अतएव 'नमः अद्वैततत्त्वाय' कथनीयं आसीत्, येन भ्रमस्य आशङ्का अपि न भवेत्। एवमेव अन्यस्थलेषु अपि ग्राह्यम्। इदं अपि कथ्यते यत् पद्ये सन्धिः आवश्यकः। अस्मिन् सम्बन्धे अहं सविस्तरं यथास्थान निवेदयिष्यामि। अद्य तु गद्ये अपि सर्वत्र सन्धिः अवलोक्यते तदा का कथा पद्यस्य। इदं प्रतीयते यत् अधिकांश-पण्डितानां मतानुसारं येन प्रकारेण संस्कृतं अत्यन्तं जटिलं स्यात्, येन अबाधरूपेण संस्कृतस्य पठनपाठनं, भाषणं, उच्चारणं अपि न भवेत्, तत्सर्वं करणीयं व्याकरण-सम्मतं असम्मतं वा। परं इदं हितकरं न अस्ति। दीर्घकालात् अहं आसि एकः सार्वजनिकः कार्यकर्ता। संस्कृतक्षेत्रे प्रायः सर्वे पण्डितवर्याः मां जानन्ति तथा अहं तान् विदुषः जानामि। प्रायः एतेभ्यः विद्वद्भ्यः अस्माकं पत्रव्यवहारः निरन्तरं चलति, तथा सम्मिलने परस्परं सम्भाषणं अपि भवति। यदा यदा देशे संस्कृत-सम्मेलनानि भवन्ति, तदा तदा तेषां दर्शनानि तु अवश्यमेव भवन्ति। अस्माकं ऐतिहासिके आगरानगरे (प्राचीने चन्द्रपुरे) द्वे अ० भा० संस्कृत महासम्मेलने अभूताम् भारतीय विद्याप्रचारसमितेः तत्त्वावधाने, यस्याः समित्याः सौभाग्यवशात् अहं प्रधानमंत्री अस्मि। एतयोः सम्मेलनयोः देशस्य प्रायः सर्वेषां महाविदुषां महान् सम्मर्दः सञ्जातः।

प्रायः सर्वेषां विदुषां भाषणानि सञ्जातानि। तेषु विद्वत्सु प्रायः सर्वेषां प्रान्तानां विद्वांसः आसन् विशेषतया उत्तरभारतस्य दक्षिणभारतस्य च। इदं निवेदने चेत्स्यते मे चेतः यत्ते प्रायः अबाधरूपेण संस्कृतभाषणं कर्तुं न शेकुः, एकं द्वयं वा विद्वांसं विहाय। तेषां पाण्डित्ये सन्देहस्थलं न आसीत, न अस्ति, परं तेषु भाषणेषु सन्धिकारणात् प्रवाहत्वं न आगच्छति स्म। ते

एकपदे तत् भवतु परं वाक्ये नियमतः वारितः स्यात् इदानीम् संस्कृतस्य काठिन्यकारणात् तस्य परमः ह्रासः सञ्जातः। यदि विद्वांसः अस्यां दिशि ध्यानं न प्रदास्यन्ति तदा संस्कृतस्य लोपः भविष्यति, तदा तेन सह भारतीयसभ्यतायाः भारतीयसंस्कृतेः भारतीयधर्मस्य, अध्यात्मवादस्य च विनाशः सम्पत्स्यते। अन्ते आर्य्यजातेः नाशः, विश्वशान्तेः नाशः विनिश्चितः। सर्वे जानन्ति एव।

"धर्मः एव हतः हन्ति, धर्मः रक्षति रक्षितः"

वेदधर्मः अपौरुषेयत्वात् ईश्वर-धर्मः वास्तविक-मानवधर्मः। इमं विहाय मानव-हितं लोकत्राणं च भवितुं न अर्हति। अतएव संस्कृतविद्वांसः विचारयन्तु यत्ते दुराग्रहात् निरर्थक-भाषा-काठिन्यात् लोकनाशं इच्छन्ति लोककल्याणं वा? यत् इच्छितं स्यात् तत् एव करणीयम्। अहं भूयः भूयः निवेदयामि यत् भाषा सुबोधाय भवति न तु दुर्बोधाय। दुर्बोधाय भवेत् चेत् तदा मौनं वरम्। दुर्बोधत्वं काठिन्यं संस्कृते आनीयते केवलं पाण्डित्य-प्रदर्शनाय, येन अस्माकं सर्वस्वं विनश्येत्।

(३) कतिपयजनाः कथयन्ति 'सन्धिः शोभां वर्द्धयति लघुत्वं च आपादयति'। परं इदं अपि विचारणीयं तैः यत् का नाम शोभा यया वर्णनातीतं काठिन्यं उत्पद्येत, 'पण्डितानां कृते इदं शोभनं स्यात्, परं इच्छितं स्यात् संस्कृतं जनभाषा, राष्ट्रभाषा च तदा भाषासारल्यं आवश्यकम्। यदि संस्कृतज्ञाः इच्छान्ति यत् संस्कृतं केवलं अल्प-संख्यकजनानां अर्थात् कोटि-पुरुषेषु अल्पजनानां पण्डितानां वा भाषा भवेत् अथवा संस्कृतं नश्येत् तदा ते केवलं शोभां वर्द्धयन्तु, कथितलघुत्वं आपादयन्तु, परं यत्ते संस्कृतं जनभाषां कामयन्ते पूर्ववत्, तदा व्यावहारिक-

दृष्ट्या कार्यं करणीयं एव। व्यावहारिकतां विहाय कथं कल्याणं भविष्यति अहं न जानामि। द्वितीयं वाक्येषु वस्तुतः सन्धि-कारणात् न शोभां वर्द्धयति न लघुत्वं आगच्छति, अपितु काठिन्यं आयाति। यथा 'अरब्युर्द्वंगरेजी भाषाणां प्रचारः देशेऽवलोक्य-ते'। लघुत्वं नाम किं, इद तु पठने अपि न आगच्छति। शुद्धोच्चारणं अपि भवितुं न अर्हति। इदं वाक्यं अस्ति 'अरबी-उर्दू-अंग्रेजी-भाषाणां प्रचारः देशे अवलोक्यते'। सन्धौ 'अरब्युर्द्वंगरेजी' कश्चित् अपि ज्ञातुं न शक्नोति सहसा, यत् किं कथ्यते? का हानिः यत् इदं पदच्छेदपूर्वकं लिख्यते। अयं सुधारः आवश्यकः। यत्र विशेषसंज्ञाः विद्यन्ते, तदा तत्र पदच्छेदपूर्वकं लेखनं आवश्य-कम्। महा विद्वान् पं० श्रीपाद दामोदर सातवलेकरस्य इदं निश्चितं मतं अस्ति यत् सारल्याय सौविध्याय च पदच्छेदपूर्व-कं लेखनं (समासादिषु यत्र विविध-शब्दानां एकीकरण भवति) आवश्यकम्। तैः सह अस्माकं पूर्ण-सम्मतिः विद्यते। लघुत्वं वस्तुतः न आगच्छति यथा—

'तांस्ते प्रेत्यापि गच्छन्ति..........'

इद वाक्यं अस्ति 'तान् (लोकान्) ते प्रेत्य अपि गच्छन्ति .. ........'। तान् ते सन्धौ भवति 'तांस्ते'। अत्र 'स्' अक्षर, अधिकः जायते। अतएव लघुत्वं सर्वत्र न आयाति अपितु प्रायः वृद्धिः सञ्जायते। काठिन्यं तु सन्धौ आयाति एव मुख्यतः वाक्येषु। अतएव पदं विहाय वाक्ये सन्धिः अकार्यः। अयं आवश्यकः नियमः।

(४) वाक्येषु सन्धि-कारणात् महान् दोषः अयं आगच्छति यत् कश्चित् अपि अबाधरूपेण पठनपाठनं भाषणं कर्तुं न शक्नोति न शुद्धोच्चारणं अपि। एकं उदाहरणं कादम्बरीतः दत्तं अस्ति

एवमेव अन्यानि उदाहरणानि अपि मध्य-कालिक-वर्तमान कालिक संस्कृतस्य। पाठकाः तानि उद्धरणानि पठेयुः, तथा स्वयमेव अनुभवेयुः यत्ते तानि अबाधरूपेण पठितुं शक्नुवन्ति न वा। सन्धिकारणात् क्षणे क्षणे पदानां रूपाणि परिवर्त्तन्ते। अनेन वर्णनातीतं काठिन्यं उत्पद्यते। पदानां शुद्धस्वरूपं अपि ज्ञातुं जनाः समर्थाः न भवन्ति। इदं निवेदितं मया यत् सर्वत्र नियमरूपेण सन्धि-प्रयोगेण पदच्छेदे दीर्घः समयः नष्टः भवति। अयं स्वतः एव एकः जटिलः प्रश्नः भवति। मस्तिष्के पदच्छेद-करणं आवश्यकं सञ्जायते। पठने सर्वेषां जनानां अयं उद्देशः भवति यत्ते वाक्यार्थान् शीघ्रातिशीघ्रं जानीयुः गृह्णन्तु वा। परं तत्कार्यं भवितुं न अर्हति यावत् पदच्छेदः न क्रियते। अनेन बाधा आपतति। अस्मात् कारणात् कश्चित् अपि अबाधरूपेण वाक्यानां पठनपाठनं, अर्थग्रहणं वा कर्तुं न शक्नोति। अतः वाक्येषु सन्धिः न कार्यः। अनेन शुद्धोच्चारणं अपि भवितुं न अर्हति। अशुद्धो-च्चारणात् व्यर्थहास्यं भवति, अभीप्सार्थलाभः न सञ्जायते तथा भ्रमः उत्पद्यते। यथा एकस्मिन् स्थले आगच्छति,

'नमोऽद्वैततत्त्वाय मुक्तिप्रदाय'

पठने नमो द्वैत तत्त्वाय आगच्छति। श्रोतारः 'नमः द्वैततत्त्वाय' अवबोधयितुं शक्नुवन्ति न तु 'नमः अद्वैत-तत्त्वाय' यथा पुस्तके विद्यते यत् लेखकस्य अभीष्टं अस्ति। द्वितीयं सन्धौ 'नमः द्वैत-तत्त्वाय' 'नमो द्वैततत्त्वाय' भविष्यति एवमेव 'नमः अद्वैततत्त्वाय' 'नमोऽद्वैततत्त्वाय' 'नमो द्वैततत्त्वाय' (यतः अवग्रहः (ऽ) इदं चिह्नं अपि न दीयते येन 'अ' अक्षरस्य लोपः सन्धौ ज्ञातः स्यात्)। उच्चारणे भ्रमः अवश्यमेव उत्पन्नः भविष्यति, यतः सन्धौ इदं वाक्यं एकं रूपं ग्रहीष्यति। अनेन सिध्यति यत् वाक्येषु सन्धिः घोरानर्थकरः यतः लेखकस्य अर्थः सुस्पष्टः न जायते, अपितु भ्रमः

उत्पद्यते । नहि, नहि अर्थस्य अनर्थः भवति, यथा अत्र अवलोक्यते । अतएव 'नमः अद्वैततत्त्वाय' कथनीय आसीत्, येन भ्रमस्य आशङ्का अपि न भवेद् । एवमेव अन्यस्थलेषु अपि ग्राह्यम् । इदं अपि कथ्यते यत् पद्ये सन्धिः आवश्यकः । अस्मिन् सम्बन्धे अहं सविस्तरं यथास्थान निवेदयिष्यामि । अद्य तु गद्ये अपि सर्वत्र सन्धिः अवलोक्यते तदा का कथा पद्यस्य । इद प्रतीयते यत् अधिकांश-पण्डितानां मतानुसारं येन प्रकारेण संस्कृतं अत्यन्तं जटिलं स्यात्, येन अगाधरूपेण संस्कृतस्य पठनपाठनं, भाषणं, उच्चारण अपि न भवेत्, तस्मव करणीय व्याकरण-सम्मत असम्मतं वा । परं इदं हितकरं न अस्ति। दीर्घकालात् अह आसि एकः सार्वजनिकः कार्यकर्ता। संस्कृतक्षेत्रे प्रायः सर्वे पण्डितवर्याः मां जानन्ति तथा अहं तान् विदुषः जानामि । प्राय. एतेभ्यः विद्वद्भ्यः अस्माकं पत्रव्यवहारः निरन्तर चलति, तथा सम्मिलने परस्पर सम्भाषण अपि भवति। यदा यदा देशे संस्कृत-सम्मेलनानि भवन्ति, तदा तदा तेषां दर्शनानि तु अवश्यमेव भवन्ति। अस्माकं ऐतिहासिके आगरानगरे (प्राचीने अग्रपुरे) द्वे अ० भा० संस्कृत महासम्मेलने अभूताम् भारतीय विद्याप्रचारसमितेः तत्त्वावधाने, यस्याः समित्याः सौभाग्य— वशात् अहं प्रधानमंत्री अस्मि । एतयो सम्मेलनयोः देशस्य प्रायः सर्वेषां महाविदुषां महान् सम्मर्द सञ्जातः ।

प्राय. सर्वेषां विदुषां भाषणानि सञ्जातानि । तेषु विद्वत्सु प्राय. सर्वेषां प्रान्तानां विद्वांस आसन् विशेषतया उत्तरभारतस्य दाक्षिणभारतस्य च। इद निवेदने चेखिद्यते मे चेतः यत्ते प्रायः अबाधरूपेण संस्कृतभाषण कर्तुं न शेकुः, एक द्वय वा विद्वांसं विहाय । तेषां पाण्डित्ये सन्देहस्थल न आसीत, न अस्ति, परं तेषु भाषणेषु सन्धिकारणात् प्रवाहत्वं न आगच्छति स्म। ते

अबाधरूपेण संस्कृतभाषणं कर्तुं समर्थाः न भवन्ति स्म। सन्धियुते भाषणे एका अन्या अपि बाधा आपतति। पूर्वपदस्य रूपं परपदस्यरूपात् निर्णीतं भवति यथा 'भारतीयो जनः' 'भारतीयः पुरुषः' एवमेव अन्यस्थलेषु विचारणीयम्।

, प्रायः सर्वे विद्वांसः परस्परं सम्भाषणे स्वीकुर्वन्ति स्म यत् वाक्येषु सन्धि-कारणात् अबाधत्वं प्रवाहत्वं न आयाति। कतिपयविद्वांसः यथा साध्यं सन्धि-राहित्येन भाषणं कुर्वन्ति स्म परं अनभ्यास कारणात् तेषां भाषणेषु अपि प्रवाहत्वं न आगच्छति स्म। तेषां विदुषां मध्ये एकः पण्डित राजाचार्य- डॉ०ए०वी० दीक्षितमहोदय, अध्यक्ष, संस्कृत-महाविद्यालय, भारतीय विद्या-भवन, मुम्बईस्थः आसीत् यः संस्कृतं अबाधरूपेण अवश्यं भाषते स्म। परं स आसित महाविद्वान् व्याख्यान-वाचस्पतिः। परं यदि सहस्रेषु महाविद्वत्सु पण्डितेषु एकः अपवादमात्रेण तिष्ठेत् तदा तेन भवति किम्? अपवादः तु नियमं सिद्धं करोति। अहं अन्येषां विदुषां तिरस्कारं न करोमि। ते तु सर्वे अस्माकं पूज्याः सन्ति श्रद्धास्पदाः अपि। अहं तु एकां सत्यां वार्तां कथयामि संस्कृतहिताय, देशहिताय च येन संस्कृतं भूयः अपि राष्ट्रभाषा अन्ताराष्ट्रियभाषा च भवेत्। अहं न जानामि यत् संस्कृत-विद्वांसः इदं तथ्यं जनतासमक्षे स्वीकारिष्यन्ति न वा परं हृदये तु अवश्यमेव अस्माकं निवेदनं 'सत्यं' इति स्वीकारिष्यन्ति। समयः आगतः अस्ति यदा संस्कृतहिताय 'सत्यं' निर्भीकतया कथ्येत। वाक्येषु सन्धियुतं संस्कृतस्य काठिनतायाः अहं एकं अन्यं उदाहरणं ददामि। अद्य प्रचलित-संस्कृतं कश्चित् अपि श्रवणमात्रेण शिक्षितुं न शक्नोति। संसारस्था अन्याः भाषाः जनाः श्रवणमात्रेण शिक्षितुं, वक्तुं, अवबोधयितुं शक्नुवन्ति, परं

संस्कृतं पठनेन विना न आगन्तुं शक्नोति। इदं संस्कृतस्य वर्णनातीताया कठिनतायाः एकं ज्वलत् प्रमाणम्। ईदृशं संस्कृतं यत् अधः दीयते कः वराकः अबाधरूपेण पठितुं, भाषितुं, अवबोधयितुं शक्नोति—

गीतात (शाङ्कर-भाष्यम्, अध्यायः २ श्लोकः १२)

न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः।
न चैव न भविष्यामः सर्वे वयमतःपरम्॥

शाङ्करभाष्यम्- त्वं त्व पदलक्ष्यार्थश्च जातु कदाचिन्नासीरिति न किन्त्वासीरेव' अतीतानागतदेहोत्पत्त्यादिषु जाग्रदादिष्विव त्वमस्येव। यथा जाग्रति तिष्ठत एव तव स्वप्नसम्बन्ध स्वप्ने तिष्ठत एव सुषुप्तिसम्बन्ध, सुषुप्तौ तिष्ठत एव जाग्रत्सम्बन्धस्तथागतदेहे तिष्ठत एवैतद्देहसम्बन्ध एतद्देहे तिष्ठत एव भाविदेहसम्बन्धोऽङ्गीकर्त्तव्यस्त्वन्यथा सुखदुःखादिवैचित्र्यासम्भवात्कर्मवैचित्र्यादेव तव सुखादिवैचित्र्य, ततस्तादृग्विधकर्मकर्त्तुस्तवास्त्येव देहान्तरेषु सद्भावस्त्वन्यथा कृतहानाऽकृताभ्यागमप्रसङ्गात्। 'जन्मान्तरकृत कर्म भुञ्जते जन्तवोऽधुना' इति, 'यत्कर्म कुरुते तदभिसम्पद्यते' इत्यादि श्रुति-स्मृति-विरोधप्रसङ्गाच्च पूर्वकृतस्याधुना अधुनाकृतस्य कर्मण. फलं भाविजन्मन्यनुभुज्येत। तथैव श्रूयते 'प्राप्यान्त कर्मणस्तस्य यत्किञ्चेह करोत्ययम्। तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे॥' इति यतस्ततो जाग्रदाद्यवस्थास्विव गतदेहेषु भाविदेहेष्वपि इदानीमिव तव त्रिष्वपि कालेषु सद्भावोऽस्त्येवेत्यर्थः। एतेन त्वम्पदार्थस्यात्मनो देहेन्द्रियादिभ्यो भिन्नत्वं नित्यत्व च सूचित भवति। इमे जनाधिपाश्च नासन्निति न, किन्तु त्व पदार्थत्वाविशेषात् त्रिषुकालेष्वासन्नेव। यथा अहं तथैवैतेऽपि नित्यसिद्धसत्स्वभावा·

इत्यर्थः। जनाधिपा इत्यविद्या वृत्तिभेदेन बहुवचनं न त्वात्मभेदेन। तद्भेदे प्रमाणाभावात्। नन्वात्मभेदे प्रमाणाभाव इति यदुक्तं नदतिसाहसं, आत्मतत्त्वे विचार्यमाणे त्वात्मैकत्वं न घटते। प्रत्यक्षादिप्रमाणविरोधात्। तथाहि। यत्रयत्र अहंप्रत्ययभेदस्तत्रतत्रात्मभेद इति प्रतिदेहमहंप्रत्ययभेदस्य प्रत्यक्षेणोपलभ्यमानत्वादेकत्वे तु त्वमहमयामित्यादिव्यवहारलोपप्रसङ्गात् ततः आत्मभेदे प्रत्यक्षं प्रमाणम्,आत्मा प्रतिव्यक्तिभिन्नो भवति व्यक्तीनां भिन्नत्वाद्घटादिवत्, आत्मा भिन्न एव भवति प्रतिव्यक्त्यहंप्रत्ययभेदात् व्यक्तिप्रत्ययभेदात् घटादिवदित्याद्यनुमानं च प्रमाणम्। 'अदितिर्देवा गन्धर्वा मनुष्याः पितरोऽसुराः' इति देवादिभेदप्रतिपादक श्रुतिश्च प्रमाणम्। 'देवदानवगन्धर्वा यक्षराक्षसकिन्नराः' इत्यादि पुराणवचनं च प्रमाणम्। यद्यात्मैकत्वमेवाभ्युपगम्यते तर्हि तव सुखदुःखादिव्यवस्था च न सिद्ध्येत्। एकस्मिन् दुःखिनि सुखिनि च सर्वेऽपि दुःखिनः सुखिनश्च स्युः।

श्लोकस्य अर्थः तु सुस्पष्टः एव; परं शाङ्करभाष्यं कठिनतमं विद्यते। श्लोकस्य पदच्छेदः अत्र दीयते—

पदच्छेदः—न तु एव अहं जातु न आसं न त्वं न इमे जनाधिपाः
न च एव न भविष्यामः सर्वे वयम् अतः परम् ॥

श्लोकः सरलः। वस्तुतः तस्य व्याख्यायाः आवश्यकता न अस्ति, परं व्याख्या काठिनतमा, या भ्रमं उत्पादयति।

परं वाक्येषु सन्धिरहितं 'शाङ्करभाष्यम्' सर्वे सरलतया अवबोधयितुं शक्नुवन्ति। सन्धिरहितं 'भाष्यम्' इदं रूपं भविष्यति—

त्वं त्वं पदलक्ष्यार्थः च जातु कदाचित् न आसीः इति न किंतु आसीः एव। अतीतानागतदेहोत्पत्त्यादिषु जाग्रदादिषु इव त्वं

असि एव। यथा जाग्रति तिष्ठतः एव तव स्वप्नसम्बन्धः स्वप्ने तिष्ठतः एव सुषुप्तिसम्बन्धः सुषुप्तौ तिष्ठत एवं जाग्रत्सम्बन्धः तथागतदेहे तिष्ठतः एव एतद्देहसम्बन्धः एतद्देहे तिष्ठतः एव भाविदेहसम्बन्धः अङ्गीकर्तव्यः तु अन्यथा सुखदुःखादि वैचित्र्यासंभवात् कर्मवैचित्र्यात् एव तव सुखादिवैचित्र्यं ततः तादृग्विधकर्मकर्तुः तव अस्ति एव देहान्तरेषु सद्भावः तु अन्यथा कृतहानाकृताभ्यागमप्रसङ्गात्। 'जन्मान्तरकृत कर्म भुञ्जते जन्तवः अधुना' इति यत्कर्म कुरुते तत् अभिसंपद्यते' इत्यादि श्रुतिस्मृतिविरोधप्रसङ्गात् च पूर्वकृतस्य अधुना अधुनाकृतस्य कर्मणः फलं भाविजन्मनि अनुभुज्येत। तथा एव श्रूयते 'प्राप्य अन्त कर्मणः तस्य यत् किञ्च इह करोति अयम्। तस्मात् लोकात् पुनरेति अस्मै लोकाय कर्मणे॥' इति यतः ततः जाग्रदाद्यवस्थासु इव गतदेहेषु भाविदेहेषु अपि इदानीं इव तव त्रिषु अपि कालेषु सद्भावः अस्ति एव इति अर्थः। एतेन त्वं पदार्थस्य आत्मनः देहेन्द्रियादिभ्य भिन्नत्व नित्यत्वं च सूचितं भवति। इमे जनाधिपाः च न आसन् इति न किन्तु त्वं पदार्थत्वाविशेषात् त्रिषु कालेषु आसन् एव। यथा अहं तथा एव एते अपि नित्यसिद्धसत्सुखभावाः इति अर्थः। जनाधिपाः इति अविद्यावृत्तिभेदेन बहुवचनं न तु आत्मभेदेन। तद्भेदे प्रमाणाभावात्। ननु आत्मभेदे प्रमाणाभाव इति यत् उक्तं तत् अतिसाहस आत्मतत्त्वे विचार्यमाणे तु आत्मैकत्वं न घटते। प्रत्यक्षादिप्रमाणविरोधात्।'

तथाहि यत्र यत्र अहंप्रत्ययभेदः तत्र तत्र आत्मभेद इति प्रतिदेहं अहंप्रत्ययभेदस्य प्रत्यक्षेण उपलभ्यमानत्वात् एकत्वे तु त्व अहं इत्यादि व्यवहारलोपप्रसङ्गात् ततः आत्मभेदे प्रत्यक्षं प्रमाणम्। आत्मभेदाभावे व्यवहारः न सिद्ध्यति इति, व्यवहारासिद्धेः अन्यथा अनुपपत्त्या अर्थापत्तिः च प्रमाणम्। आत्मा प्रतिदेहं

भिन्नः भवति व्यक्तीनां भिन्नत्वाद्रवादिवत्, आत्मा भिन्नः एव भवति प्रतिव्यक्ताहंप्रत्ययभेदात् घटादिवत् इत्यादि अनुमानं च प्रमाणम्। 'अदितिः देवाः गन्धर्वाः मनुष्याः पितरः असुराः' इति देवादिभेदप्रतिपादकश्रुतिः च प्रमाणम्। 'देवदानवगन्धर्वाः यक्षराक्षसकिन्नराः' इत्यादि पुराणवचनं च प्रमाणम्। यदि आत्मैकत्वं एव अभ्युपगम्यते तर्हि तव सुखदुःखादि व्यवस्था च न सिद्धयेत्। एकस्मिन् दुःखिनि सुखिनि च सर्वे अपि दुःखिनः सुखिनः च स्युः।"

(५) एका अन्या अपि आपत्तिः विद्यते सन्धौ। स्वरसन्धौ इमानि रूपाणि पूर्वपरस्वरवर्णानां भवन्ति—

| स्वरवर्णाः | | सन्धौ रूपम् |
|---|---|---|
| अ + अ | = | आ |
| अ + आ | = | आ |
| आ + अ | = | आ |
| आ + आ | = | आ |
| इ + इ | = | ई |
| इ + ई | = | ई |
| ई + इ | = | ई |
| ई + ई | = | ई इत्यादीनि |

एवमेव अन्यस्वरविषयेषु अपि विविधानि रूपाणि जायन्ते। यथा—

| | | |
|---|---|---|
| अ + इ | = | ए |
| अ + ई | = | ए |
| आ + इ | = | ए |
| आ + ई | = | ए इत्यादीनि |

अनेन बालकाः किं बुधाः अपि कदापि कदापि भ्रमे पतन्ति यत् पूर्वस्वरः कः परस्वरः कः ? पदानां वास्तविकं रूपं अपि ज्ञातं न भवति। ते वराकाः पदानां स्वरूपनिर्णये व्यर्थं समयं यापयन्ति। तथापि कदापि कदापि स्वरूपनिर्णयः न भवति। द्वितीयं ह्रस्व-दीर्घ-स्वरसन्धौ एकं रूपं जायते यथा ह्रस्व-ह्रस्वस्वरसन्ध्योः तथा दीर्घ-दीर्घस्वरसन्ध्योः। कदापि कदापि एतानि पदानि अपि भवन्ति यानि ह्रस्व-स्वर-युतानि दीर्घ-स्वरयुतानि वा स्युः सन्धौ अथवा सन्धि-नियमकारणात् एकपदस्य द्वे रूपे भवितुं अर्हतः येन अर्थे भेदः उत्पद्यते अर्थात् एकस्यां दशायां अन्यः अर्थः तथा अन्यस्यां दशायां अन्यः अर्थः भवति। श्रीमद्भगवद्गीतायां एकः सुप्रसिद्धः श्लोकः विद्यते।

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥
(अध्यायः १८, श्लोकः ६६)

अस्य जगद्विख्यात-श्लोकस्य अर्थः बहुप्रकारेण क्रियते। अस्माकं निवेदनस्य अयं आशयः यत् बहव विद्वांसः 'सर्व +धर्मान्' इति पदं मत्वा अर्थान् कुर्वन्ति। अस्माकं मते अपि इदं पदं एव विद्यते, परं कतिपय विद्वांस 'सर्व+अधर्मान्' इति पद गृहीत्वा अर्थं कुर्वन्ति। स्वपक्षे एते विद्वांसः इदं सूत्रं पठन्ति।

शकन्ध्वादिषु पररूपं वाच्यम्। तच्टेः॥
(लघुसिद्धान्त-कौमुदी पृष्ठः १४)

परं यदि 'सर्व+धर्मान्' पद मन्येत तदा भिन्नः अर्थः भविष्यति। यदि 'सर्व + अधर्मान्' पदं मन्येत तथा सर्वथा भिन्नः विपरीतः वा अर्थः भविष्यति। विद्वांसः मम निवेदनस्य तात्पर्यं

सरलतया ज्ञास्यन्ति, अतएव विस्तृत-व्याख्यायाः आवश्यकता न प्रतीयते। इयं आपत्तिः तु पदे आपतति, परं वाक्ये विविध-पदानां सन्धौ अपि ईदृशी आपत्तिः आपतति येन पदानां स्वरूप-निर्णयः कदापि कदापि असम्भवः सञ्जायते। अहं अत्र एकं साधारणं उदाहरणं ददामि—

तथा + एव = तथैव
अत्र + एव = अत्रैव

'तथा' अव्ययपदे दीर्घ 'आ' विद्यते, तथा 'अत्र' अव्ययपदे ह्रस्व 'अ' विद्यते परं द्वयोः पदयोः सन्धौ 'तथैव' 'अत्रैव' समानं रूपं भविष्यति। दीर्घपदेषु वाक्ये ईदृशी आपत्तिः आपतति यथा—

"श्रुतिस्मृत्यविहितत्वात्स्वधर्मत्वानुपपत्तेर्विहितत्यागाविहित-करणदोषौ"

अत्र विविधपदानां एकस्मिन् वाक्ये संहिता क्रियते। प्रथमं तु पदच्छेदः नितान्तः आवश्यकः। पदच्छेदे साधारणतया त्रुटिः भवितुं अर्हति। यदि भवति तथा अर्थस्य अनर्थः सरलतया सञ्जायते। पूर्वोदाहरणे इमानि पदानि विद्यन्ते।

'श्रुतिस्मृत्यविहितत्वात्+स्वधर्मत्वानुपपत्तेः + विहितत्यागा-विहितकरणदोषौ' इति

इमानि पदानि, दीर्घसमासाः सन्ति येषां अर्थकरणे बाधा उत्पद्यते, तदा का कथा सन्धिकृतपदानाम्। समासे सन्धिः भवतु परं वाक्ये पदानां सन्धिः सर्वथा अनर्थकरः, येन भाषायां वर्णनातीतं काठिन्यं आगच्छति। उत्तमं स्यात् यत् समासविषये अपि अनेन प्रकारेण लेखनं प्रचलितं स्यात्, यत् बहूनां विदुषां मतं विद्यते। यथा,—

श्रुति-स्मृति-अविहितत्वात्, स्वधर्मत्व-अनुपपत्ते, विहितत्याग-अविहितकरणदोषौ। इदं मतं अस्ति देशस्य महा विदुषः पं० श्रीपाद दामोदर सातवलेकरस्य तथा अन्येषां अपि। अनेन प्रकारेण लेखन सौचिष्याय प्रायः 'संस्कृतम्' पत्रे तथा अन्येषु अवलोक्यते। पूर्वश्लोकस्य शाङ्करभाष्ये इदं वाक्यं विद्यते।

.. स्वकर्मणा तमभ्यर्च्यंति स्मरणान्नामकीर्त्यादिलक्षणस्य कर्मणः श्रुतिस्मृत्यविहितत्वात्स्वधर्मत्वानुपपत्तेर्विहितत्यागाविहितकरणदोषौ च प्रसज्येयाताम्.. .. " अस्य वाक्यस्य अर्थः सरलतया विदुषां कृते अपि स्पष्टः न भवति।

## (२) वेदे

वेदे अपि सन्धिकारणात् वर्णनातीत काठिन्य आगच्छति। गद्य पद्य वा अर्थात् लेखनं कथनं च वाक्यरूपेण भवितुं अर्हति अर्थ-प्रदर्शनाय। अतएव गद्ये पद्ये अर्थात् लेखनकथनयोः उभयरूपयो वाक्यानि आवश्यकानि। अनेन सिद्ध्यति यत् सन्धिविचार करणे गद्ये पद्ये च कश्चित् अपि भेद भवितुं न अर्हति। इदं कथ्यते यत्पद्ये सन्धि नित्य, पर व्याकरणानुसार इदं अपि सत्यं न अस्ति। साम्प्रतं तु एतादृशी परिपाटी प्रचलिता दरीदृश्यते यद्गद्य पद्यं वा सर्वत्र नियमरूपेण सन्धि क्रियते अवलोक्यते च। भाषा अस्माकं कृते विद्यते न तु वयं भाषाया कृते। भाषा मिथ विचारविनिमाय व्यवहारकरणाय विद्यते। अहं भूयः भूयः निवेदयामि यत् भाषा सुबोधाय भवति न तु दुर्बोधाय। दुर्बोधाय भवेत् चेत् तदा मौनं वरम्। भाषा काठिन्यात् सर्वं व्यवहारसाधनं ज्ञानसाधनं च अवरुद्धं तिष्ठेत्। शनैः शनैः सर्वे मनुष्या पशुतुल्या स्युः। अनेन मार्गेण जीवनस्य मुख्योद्देश्य लोकज्ञानसंग्रहः ईश्वरप्राप्ति च दुर्लभा स्यात्। अहं मन्ये वेदज्ञानं ईश्वरप्रदत्तं, परं भाषाकाठिन्य

मनुष्यैः आनीतम् ।अस्माकं धर्मानुसारम्।

"वेदः अखिलः धर्ममूलम्...... " ( मनु० अध्याय २,श्लो० ६)

व्याख्या— वेदः ऋग्यजुःसामाथर्वलक्षणः धर्मे स्वतः प्रमाणम्, अन्यानि सर्वाणि शास्त्राणि परतः प्रमाणानि ।

" श्रुतिप्रमाणतः विद्वान् स्वधर्मे निविशेत वै "

( मनु० अध्याय २, श्लोक ८)

विश्वस्य सर्वेषां मानवानां विदुषां कृते विशेषतया वेदधर्मावलम्बिनां सत्यसनातनधर्मावलम्बिनां कृते वेदज्ञानं नितान्तं आवश्यकम् । परं अद्य कः वराकः भारतनिवासी त्रयस्त्रिंश कोटि कथितदेवेषु भगवतः वेदान् पठति मनुष्यकृतभाषाकाठिन्यात् । लौकिक-संस्कृतं न पठ्यते भारतीयैः तदा का कथा वैदिकभाषायाः पठनपाठनस्य, वेदज्ञान-संचयस्य वा। स्वरूपतः वैदिक भाषा सरलतरा, विश्वस्य सर्वासां भाषाणां जननी आदिभाषाकारणात् । इयं देववाणी प्रत्येक सर्गादौ देवानां द्वारा ईश्वर-ज्ञान-प्रसाराय लोकहिताय च प्रकटीक्रियते ।

यथा मनुष्याणां शारीरिकसुख-सौविध्याय निखिल-प्राणिमात्र-हिताय च जलवायु-पृथ्वी-सूर्यचन्द्रादयः रचिताः, एवमेव मनुष्याणां आत्मिकोन्नत्यै वेदरूपं ज्ञान-विज्ञानं प्रदत्तम्। एतस्य सर्वस्य ज्ञान-विज्ञानस्य एकमात्रसाधनं वाहनं वा भाषा, अतएव वेदवाणी, देववाणी वा प्रकटीकृता। इदं वैदिकसंस्कृतं देवानां अपि भाषा विद्यते, अतएव 'देववाणी' इति कथ्यते । यथा जल-वायु-पृथ्वी-सूर्यादिभ्यः शक्तिं गृहीत्वा विविधानि आश्चर्यजनकानि ( रेल-तार-रेडियो-इत्यादीनि ) वस्तूनि मनुष्यैः निर्मितानि, एवमेव मनुष्यैः वैदिकभाषातः विविध-भाषाः निर्मिताः याः अद्य लोके अव-

लोक्यन्ते । पर आदिस्रोतः तु वैदिक भाषा एव । तस्याः घोरतम पतनं अवलोक्य दोदूयते अस्माकं चेतः ।

यथा निखिल ब्रह्माण्डस्य मूलस्रोत, अस्माकं निखिल-सुख-साधनस्य आदिस्रोतः, परमात्मा अद्य संसारात् बहिष्क्रियते, एवमेव तस्य परमात्मन सम्पूर्ण नित्यज्ञानं वेदरूप तथा वैदिकी भाषा, विश्वस्य सर्वासां भाषाणा जननी, बहिष्क्रियते तिरस्क्रियते च । किं कथ्येत यदि भारतीयाः, आर्य्याः, कथितश्रेष्ठजनाः, अस्याः दैवि-सम्पत्ते रिक्तहराः, संरक्षकाः स्वकर्त्तव्य न अनुभवन्ति तदा का आशा अन्य जनेभ्य । अनेन कथ वेदज्ञान लोके प्रसरेत्, तदा कथं वास्तविककल्याण सञ्जायेत । यदि अद्य निखिल विश्व नरकतुल्य क्षुध्यादिव्याधिपीडित अवलोक्यते, तदा किं आश्चर्यम् ।

येषां भारतीयानां इय प्रतिज्ञा आसीत् ।

" य. अनधीत्य द्विज वेद अन्यत्र कुरुते श्रमम् ।
स जीवन् एव शूद्रत्वं आशु गच्छति सान्वय ॥ "
( मनु० अ. २, श्लो० १६८ पदच्छेदपूर्वक )

ये वेद-ज्ञान-विज्ञान सम्प्राप्य जगद्गुरुपदवीं धारयन्ति स्म । येषां इय प्रसिद्धि. आसीत्।

एतद्देशप्रसूतस्य सकाशात् अग्रजन्मन ।
स्व स्व चरित्र शिक्षेरन् पृथिव्यां सर्वमानवा ॥
( मनु० अ. २ श्लो २० पदच्छेदपूर्वकः )

ते अद्य सर्वथा वेदज्ञानविहीना सञ्जाता । यदि त्रयस्त्रिंश-कोटिकथितदेवेषु अद्य द्वित्रिवेदज्ञा. स्यु. अपि तदा तेन किं भवति । प्रायः ते वेदज्ञा. कथ्यन्ते ये स्वरसहित वेदपठनं जानन्ति । वेदार्थः अर्थात् वेदज्ञानं तु तेषां कृते अपि दुर्लभम् ।

अज्ञेभ्यः ग्रन्थिनः श्रेष्ठाः ग्रन्थिभ्यः धारिणः वराः ।
धारिभ्यः ज्ञानिनः श्रेष्ठाः ज्ञानिभ्यः व्यवसायिनः ॥
(मनु० अ. १२, श्लो. १०३ पदच्छेदपूर्वकः)

व्याख्या—अर्थः सुस्पष्टः। ये जनाः वेदान् पठितुं अपि न शक्नुवन्ति तेभ्यः ते जनाः श्रेष्ठाः ये तान् पठितुं शक्नुवन्ति। ग्रन्थिभ्यः धारिणः श्रेष्ठाः अर्थात् ते यैः वेदाः कण्ठस्थीकृताः। धारिभ्यः ज्ञानिनः श्रेष्ठाः अर्थात् ते जनाः ये वेदानां अर्थान् जानन्ति। एतेभ्यः ज्ञानिभ्यः व्यवसायिनः श्रेष्ठाः अर्थात् ते जनाः ये वेदान् आचरन्ति, तेषां आज्ञां पालयन्ति। व्यवसायिनः वस्तुतः अनुष्ठातारः ऋषयः योगिनः वा भवन्ति येषां वेद-ज्ञानं विज्ञानसहितं विद्यते।

व्यवसायिनां अर्थात् येषां जनानां बुद्धिः ईश्वरे अवस्थिता भवति। एतेषां श्रेष्ठत्वप्रदर्शनाय गीतायां कथ्यते—

व्यवसायात्मिका बुद्धिः एका इह कुरुनन्दन।
बहुशाखाः हि अनन्ताः च बुद्धयः अव्यवसायिनाम् ॥
(गीता अ० २, श्लो० ४१ पदच्छेदपूर्वकः)

अद्य भारते वर्षे 'व्यवसायिनः' न प्राप्यन्ते। ज्ञानिनः (वेदज्ञाः) द्वित्रिजनाः स्युः, धारिणः पञ्चदशजनाः स्युः, ग्रन्थिनः ये वेदान् स्वरसहितान् पठितुं शक्नुवन्ति ते विंशतिपञ्चविंशतिसंख्याकाः वा जनाः स्युः। अज्ञाः तु प्रायः सर्वे भारतीयाः विद्यन्ते, यैः कदाचित् दर्शनं अपि न कृतं सम्पूर्ण-वेदानाम्।

अस्मिन् विषये किं कारणम्? भाषाकाठिन्यं अस्माकं उत्तरम्। कथम्? अवलोक्यताम्।

स पर्यगाच्छुक्रमकायमव्रणमस्नाविरꣳ शुद्धमपापविद्धम्।
कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यः समाभ्यः॥ (वा० य० ४०।८)

पदच्छेदः— स परि अगात् शुक्रम् अकायम् अव्रणम् अस्नाविरम् शुद्धम् अपापविद्धम्, कविः मनीषी परिभूः स्वयम्भूः याथातथ्यतः अर्थान् वि अदधात् शाश्वतीभ्यः समाभ्यः॥

शं नो देवीरभिष्टय आपो भवन्तु पीतये।
शं योरभि स्रवन्तु नः ॥ (वा० य० ३६।१२)

पदच्छेदः—शम् नः देवीः अभिष्टये आपः भवन्तु पीतये, शं योः अभि स्रवन्तु नः ॥

सन्धिकारणात् वेदमन्त्राणां पठनं अपि अत्यन्तं कठिनं जातम्, तदा का कथा तेषां अर्थज्ञानस्य। वस्तुतः सन्धिकारणात् मन्त्राणां शुद्धोच्चारणं अपि भवितुं न अर्हति, न तेषां अर्थज्ञानं सम्यक् जायते। अतएव वेदमन्त्राणां शक्तिः दूरीगता। अद्य जनैः कथ्यते यत् वेदमन्त्रेषु शक्तिः न विद्यते। परं तेषां अज्ञानं अस्मिन् विषये प्रधानकारणम्। प्रथमं तु जनाः वेदान् न पठन्ति, पठन्ति एव तदा अशुद्धं पठनं कुर्वन्ति, अर्थात् सन्धिकारणात् (वाक्येषु) पृथक् पृथक् पदानां शुद्धं पठनं भवितुं न अर्हति। यदि कदाचित् पठन्ति एव, तदा अर्थान् न अवबोधयन्ति। पठनानन्तरं वेदमन्त्राणां पदच्छेदः कार्यः अनन्तरं अर्थज्ञानं सम्भवति। यदि पदच्छेदे काचित् त्रुटिः कृता स्यात् तदा अर्थज्ञानं कदापि भवितुं न अर्हति। यदि अर्थज्ञानं न स्यात् तदा कथं आत्मिकशक्तिः जनेषु आगच्छेत् या 'मन्त्रशक्तिः' इति कथ्यते। अर्थज्ञानेन ईश्वरप्राप्तिः अपि भवति। पातञ्जलयोगदर्शने विद्यते।

ईश्वरप्रणिधानाद्वा ॥ २३ ॥ समाधिपाद •

(श्रेष्ठतम भक्तिमार्ग प्रदर्शित)

क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः ॥ २४ ॥
तस्य वाचकः प्रणवः ॥ २६ ॥ " "
तज्जपस्तदर्थभावनं च ॥ २८ ॥ " "
ततः प्रत्यक् चेतनाधिगमोऽप्यन्तरायाभावश्च ॥ २९ ॥

अतएव 'अर्थभावनम्' अर्थात् 'अर्थज्ञानम्' आवश्यकम्। अर्थ-ज्ञानेन ईश्वरप्राप्तिः अपि सम्भवाति न अन्यप्रकारेण। यः सन्धिः गद्य-पद्यमयः वाक्येषु क्रियते स अनर्थकरः तस्य कः लाभः। 'प्रणवः' 'ओ३म्' वा वेदेषु ईश्वरस्य 'निजनाम' यद्यपि सामान्यतः ईश्वरस्य अनेकानि नामानि विद्यन्ते। यदा केवलं 'ओ३म्' नाम-जप अर्थसहितः कल्याणकरः तदा का कथा अर्थसहित-सर्ववेद-ज्ञानस्य। अनेन तु सदैव-मुक्तः कश्चित् अपि पुरुषः भविष्यति यः वेदार्थान् जानाति। अतएव वेदज्ञानं लोक-परलोकहिताय नितान्तं आवश्यकम्।

लोके वेदे येन सन्धिना वाक्येषु काठिन्यं आनीयते तस्य वाक्ये बहिष्कारः कार्यः। येन वेद-ज्ञान, ईश्वरप्राप्तिः अर्थात् मनुष्यजीवनोद्देश्यपूर्तिः न सम्भवेत् तस्य कः लाभः।

## अस्माकं निश्चितं मतम्।

प्रथमं अस्माकं अपि मतं आसीत् यत् 'सन्धि वाक्येषु वैकल्पिकः इच्छाधीनः वा' परं गद्य-पद्य-वाक्येषु तस्य अनर्थकारितां अवलोक्य, इदं सर्वं गम्भीरतया भूयः विचार्य, संस्कृतव्याकरणं पुनः पुनः अवलोक्य अस्माकं निश्चितं मतं सञ्जातं यत् 'असंहिता वाक्ये' एव कल्याणकरी। वाक्येषु सन्धिः इच्छाधीनः मन्येत चेत् तदा इच्छाधीनत्वात् अपि तस्य प्रयोगः न करणीयः। वाक्येषु सन्धिः व्याकरणासम्मतः घोरानर्थकरः, अतएव तस्य आत्यन्तिकः बहिष्कारः कार्य्यः।

## विदुषां कर्तव्यम्।

इदं सर्वं विद्वद्भिः पूर्णतया विचारणीयम्। भारतस्य सर्वैः विद्वद्भिः एका सभा योजनीया, यस्यां विदेशीयाः संस्कृतविद्वांसः

अपि आहूताः स्युः। न्यूनातिन्यूनं भारतस्य सर्वे विद्वांसः एकत्री-भूय अस्मिन् विषये गम्भीरतमं विचारं कुर्युः। कदाचित् भारतीयविद्या-प्रचारसमितिः, आगरानगरम्, इदं आयोजनं कर्तुं उद्यता स्यात्। यदि विद्वांसः इच्छन्तु तदा 'संस्कृतम्' आदि-पत्रेषु स्वमतं प्रकाशयन्तु, तथा अस्माकं सविधे लिखन्तु।

## अन्तिम-निवेदनम्।

यदि भारतस्य विद्वांसः संस्कृतोत्थानं कामयन्ते इच्छन्ति वा यत् 'संस्कृतम्' भूयः अपि भारतस्य राष्ट्रभाषा, राजभाषा, जन-भाषा, अन्ताराष्ट्रिय भाषा च भवेत् पूर्ववत्, तदा पूर्वोक्तायां सभायां एकत्रीभूय इमं निश्चयं गम्भीरविचारानन्तरं कुर्वन्तु, येन 'सन्धिः वाक्ये नियमतः वारित' स्यात् ( गद्यपद्यात्मके उभय-रूपवाक्ये )। तदा इतः परं कल्याणकरं किम्? यदि 'सन्धिः वाक्ये वैकल्पिकः' इति मन्येत, तदा न्यूनातिन्यूनं २५ वर्षपर्यन्तं तस्य प्रयोगः वाक्येषु नियमतः वारितः स्यात्, येन देशे महीयान् संस्कृतप्रचारः स्यात्, येन संस्कृतभाषा सर्वेषु प्रान्तेषु समान-रूपेण जनतायाः व्यवहारभाषा भवेत् (प्रान्तीयभाषया सह न वा) तदा २५ वर्षानन्तरं विचारणीयं यत् 'वाक्येषु सन्धिः प्रयोगः क्रियते न वा'। परं यदि विद्वांसः इदं अपि कर्तुं उद्यताः न स्युः, तदा न्यूनातिन्यूनं इदं निश्चितं कृतं स्यात् यत् 'वाक्येषु सरल-सन्धयः कार्य्याः कठिनसन्धयः बहिष्कार्य्याः'। यदि तेषां मते 'वाक्येषु सन्धिः वैकल्पिकः' तदा अस्यां दशायां अयं निश्चयः अपि आवश्यकः भविष्यति यत् 'वाक्ये सरलसन्धिः, कठिन-सन्धिः' क. अस्मिन् विषये विद्वद्भिः निश्चयः अवश्यमेव करणीयः। अस्मिन् सम्बन्धे अपि स्वमतं दीयते अस्माभिः।

सर्वप्रथमं तु अयं निश्चयः कार्य्यः, यत्केवलं द्वयोः पदयोः सन्धिः

भवेत् वाक्ये। अधिकपदानां सन्धिः वाक्ये नियमतः वारितः स्यात्। द्वितीयः निश्चयः अयं स्यात् यत् केवलं चतुःसरलसन्धयः प्रचालिताः स्युः यथा,

(१) गतः+अस्मि = गतोऽस्मि = गतोस्मि
गतः+आसम् = गतआसम् = गतासम्

(२) अत्र+अपि = अत्रापि
अत्र + आगमनम् = अत्रागमनम्

(३) अत्र + एव=अत्रैव
तथा + एव = तथैव

(४) ते + अपि = तेऽपि = तेपि

इदं सर्वं व्याख्यासहितं देयं येन भ्रमः न उत्पद्येत। कठिनसन्धयः वारिताः स्युः यथा,

(१) पूजार्हौ अरिसूदन = पूजार्हावरिसूदन
(गीता अ० २,श्लो० ४)

(२) कस्मिन्+चित् + देशे = कस्मिंश्चिद्देशे इत्यादय.।

तृतीयः निश्चयः अय स्यात् यत् पद्ये अपि सन्धिः अकार्यः यथा गद्ये। भाषाविचारानुसारं एवमेव व्याकरणानुसारं गद्ये पद्ये अन्तरं न अस्ति। वाक्यानि सर्वत्र तिष्ठन्ति। अनेन संस्कृतभाषायां सारल्यं आगमिष्यति, तथा संस्कृतं भूयः अपि देशस्य राष्ट्रभाषा भविष्यति पञ्च वर्षे। अहं विचारयामि यत् घोषणानन्तरं एव प्रायः सर्वे भारतीयाः नूनं संस्कृतराष्ट्रभाषात्व-पक्षपातिनः भविष्यन्ति इति।

## प्राचीन–साहित्यम्।

कतिपय जनाः विद्वांसः वा इमां आपत्तिं उपस्थापयिष्यन्ति

यत् सन्धिविषये उपर्युक्त-नियमाः स्वीकृताः स्युः, तदा प्राचीन साहित्यस्य किं भविष्यति ? परं एतादृशी शङ्का व्यर्था । भविष्यत्काले यदा यदा प्राचीनसाहित्यस्य प्रकाशनं भवेत् तदा तदा पुस्तकेषु केवलं सरलसन्धयः देयाः । लेखकस्य भाषा तिष्ठतु परं तेषु पुस्तकेषु कठिनसन्धयः न तिष्ठन्तु । अस्मिन् हानिः न अस्ति। अनेन अस्माकं साहित्यं सुरक्षितं स्थास्यति । द्वितीयं काठिन्य-कारणात् यत् तस्य साहित्यस्य पठनपाठनं न भवति तत् एव भविष्यति अर्थात् पूर्वऋषिमहर्षीणां ज्ञानधारा सदैव पवित्र-पाविनी गङ्गावत् लोके वहिष्यति। संसारस्य अन्यदेशेषु इदं कार्यं कृतं अस्ति । स्वतन्त्रता-प्राप्त्यनन्तरं अपि देशे आंग्लभाषायाः पठनपाठनं भवति । सर्वे आंग्लभाषाविद् जानन्ति यत् शेक्स-पियरादि-लिखितकाव्य-पुस्तकेषु आवश्यक-संशोधनानि सञ्जातानि कृतानि वा । परं अनेन शेक्सपियरस्य गौरवे महत्त्वे वा न्यूनता न आगता । कदापि कदापि एकलेखकस्य पुस्तकस्य भिन्नाः, हस्तलिपयः प्राप्यन्ते । तासां संशोधनं समये समये क्रियते । अतएव अस्माकं प्राचीनसाहित्यस्य देशहिताय आवश्यक-संशोधनं हानिकरं न अस्ति, न लेखकस्य गौरवे न्यूनतां आपादयति । द्वितीयं वाक्येषु सन्धिकरणं अकरणं वा वास्तविकरूपेण संशोधनं ( भाषा संशोधनं ) न अस्ति ।

अतएव इदं कार्य्यं तु सरलतया तथा आपत्तिराहित्येन भवितुं अर्हति । अहं कादम्बरीग्रन्थस्य उदाहरणं गृह्णामि । यदि सरल सन्धिकारणात् ( कठिनसन्धि वारणात् ) ग्रन्थे सारल्यं आगच्छेत् तदा का हानिः । अद्य विद्यार्थिनां विदुषां कृते वा कादम्बरीपठनं दुष्करम् । पुस्तकेषु वाक्य-पदानि पृथक् पृथक् देयानि येन आशय शीघ्रतया सुस्पष्टः स्यात् तथा अबाधरूपेण पठनंपाठनं

उच्चारणं वा भवेत्। व्यवहारभाषा लघुपदयुक्ता भवितुं अर्हति। ये संस्कृतं देशस्य व्यवहारभाषां कामयन्ते, ये इच्छन्ति यत् तत् राष्ट्रभाषा राजभाषा च भवेत् पूर्ववत्, ते अस्माकं निवेदनस्य महत्त्वं अनुभविष्यन्ति न अन्ये।

विचार-गाम्भीर्यं भवतु परं भाषा सरला भवितव्या। अयं गुणः प्राचीनसाहित्ये 'वाक्येषु सन्धिवारणात्' आगन्तुं शक्नोति। वस्तुतः वाक्यपदेषु सन्धिः नियमविरुद्धः व्याकरणासम्मतश्च। पदानि तु पृथक् पृथक् वाक्ये भवितव्यानि, येन तेषां रूपं, लेखनं उच्चारणं स्पष्टं स्यात्। वाक्यं विविध-पदयुक्तं भवति संज्ञा-विशेषण-क्रिया-सर्वनामेत्यादि-रूपम्। न्यूनातिन्यूनं एकस्मिन् वाक्ये कर्ता आवश्यकः, तथा क्रिया। एतानि सर्वाणि पदानि भवन्ति अर्थात् व्याकरणानुसारं तेषां सर्वेषां पृथक् पृथक् रूपाणि भवन्ति। अतएव वाक्येषु विविधपदानां पृथक् पृथक् लेखनं आवश्यकम्। अनेन वर्णनातीतं सारल्यं आगमिष्यति, तथा संस्कृतस्य महीयान् प्रचारः भविष्यति, न केवलं भारते अपि तु सर्वस्मिन् लोके पूर्ववत्।

वैदिक भाषा वस्तुतः सरला विद्यते, या सर्वासां भाषाणां जननी। इदं कथितं अस्माभिः यत् वेदभाषा देवानां अपि भाषा विद्यते, येन सा 'देववाणी' इति कथ्यते। लोके मनुष्याणां अपि भाषा विद्यते लौकिक-संस्कृतरूपेण। यथा वेदभाषातः लौकिक-संस्कृतं निस्सृतम्, एवमेव लौकिक-संस्कृततः भारते सर्वाः प्रान्तीय-भाषाः निस्सृताः, न्यूनातिन्यूनं सर्वासु प्रान्तीय भाषासु संस्कृतस्य प्रभावः आपतितः। 'संस्कृतम्' पत्रस्य सुयोग्य संपादकाः संस्कृतप्राणाः पं. कालीप्रसादशास्त्रि महोदयाः १९४५ वत्सरस्य १८ संख्याङ्के पत्रे राष्ट्रभाषात्वं संस्कृतस्य एव इष्टम्" शीर्षके लेखे लिखन्ति—

"......... यदि वेदाङ्गानां अपि वेदत्वं उरीकृत्य अध्ययनं निषिद्धं मतं स्यात्, तदा संसारस्य सर्वा भाषाः तत्कृते अनध्ययनीयाः सेत्स्यन्ति, यतः ता सर्वाः वेदभाषातः एव उत्पन्नाः। अधुना अपि ताः अनेकान् शब्दान् स्वरूपे बिभ्रति। भावतः, अर्थतः, अनुवादतः च सर्वाः एव वेदानुयायिन्यः। तासु अपि विशेषेण संस्कृतभाषा यत तस्यां वेदस्य परम्परा-सम्बन्धस्य विद्यमानत्वात्।"

अतएव सुस्पष्टतया सिद्ध्यति यत् संसारस्य सर्वाः भाषाः वेदभाषातः निस्सृताः। परं केचित् विद्वांसः भारते अद्य मन्यन्ते, यत् भगवन्तः वेदाः कैश्चित् पुरुषवर्गैः न पठनीयाः, एवमेव संस्कृतभाषा अपि एकदेशीया एकजातीया वा। एते जनाः वस्तुत संस्कृतभाषायाः वैरिणः। एतादृशैः पुरुषैः प्राप्तेतिहासस्य मध्यकाले। संस्कृतं अत्यन्तं कठिनीकृतं, येन कथित-शूद्रादयः, अन्य द्विजातय वा संस्कृतं न पठेयु। एतादृशैः महानुभावैः एका नवीना अदृष्टपूर्वा असम्मतव्याकरणा लेखनपरिपाटी प्रचालिता अर्थात् वाक्य-पद-सन्धियुक्ता, येन संस्कृतपठनपाठनं दुर्लभं सञ्जातम्। भगवन्तः वेदाः दर्शनशास्त्राणिसर्वेत्रसंहितायां निबद्धानि, येन तेषां ज्ञानं दुर्लभं अभवत्।

एतादृशैः मनुष्यैः ईश्वरप्रतिपादितज्ञानमार्गः अवरुद्धः, येन संसारे अज्ञानं प्रसृतम्, अनन्तरं अनेके कुमार्गाः प्रचालिता। मनुष्या वस्तुतः राक्षसाः सञ्जाताः। दुर्भाग्यं हि एतत्सर्वम्। सङ्कीर्णहृदय-संकीर्णविचारयुतै पुरुषै मानवानां मानवधर्मस्य का दशा कृता तत्सर्वं अनेन सिद्ध्यति? अद्य अपि एते महानुभावाः प्रचुरमात्राया प्राप्यन्ते, यैः संस्कृतप्रचारमार्गः अवरोध्यते। ईदृशाः पुरुषाः भाषायां आवश्यक संशोधनं अपि न कामयन्ते,

यतः हि संस्कृतं सरलं भवेत् चेत्, तदा तस्य प्रचारः भविष्यति एव, सर्वे जनाः संस्कृतं पठिष्यन्ति एव। एतादृशैः पुरुषैः ईश्वरः अपि बन्दीकृतः अद्य अवलोक्यते। परं महर्षिपतञ्जलयः योग-दर्शनशास्त्रे कथयन्ति ईश्वरविषये—

"स हि पूर्वेषामपिगुरुः कालेनानवच्छेदात्" (२६ समाधि-पादः) एतादृशः विशेषपुरुषः सर्वज्ञः सर्वव्यापकः अजरः अमरः सदैवमुक्तः ईश्वरः मूर्खपुरुषाणां बन्धने कथं आगन्तुं शक्नोति। भगवान् वेदः उपदिशति यत्

"एतावानस्य महिमाऽतो ज्यायांश्च पूरुषः।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि॥
(वा० य० ३१।३)

यस्य ईश्वरस्य विषये श्रीमद्भगवद्गीतायां भगवता कृष्णेन अर्जुनम्प्रति कथ्यते—

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया॥
(गीता अ. १८, श्लो. ६१)

एतादृशः सर्वज्ञः सर्वव्यापकः ईश्वरः, यः सर्वभूतानां हृदयेषु तिष्ठति, यस्य चतुर्थांशे निखिलं ब्रह्माण्डं, सर्वा रचना सर्वे लोकाः स्थिताः सन्ति, यस्य भ्रूचालनमात्रेण सृष्टेः उत्पत्तिः, विनाशः, च भवति, कथं बन्धने आगन्तुं शक्नोति। ईश्वरस्य सर्वाणि वस्तूनि सूर्य-चन्द्र-पृथ्वी-जलादीनि सर्वभूतानां कृते विद्यन्ते। एवमेव तस्य सम्पूर्णं नित्यज्ञानं वेदरूपं तथा वेदवाणी यस्यां तज्ज्ञानं दीयते सर्वेषां जनानां कृते विद्यते। नेषां नाशः न भवितुं अर्हति।

अतएव 'असंहिता-वाक्ये' अस्माकं मूलमन्त्रः तिष्ठेत्। अस्मिन् एव मनुष्याणां कल्याणं निहितं विद्यते। वस्तुतः ईश्वराज्ञा इयं युगधर्मः अयम्। इयं ईश्वरेच्छा; ईश्वराज्ञा स्वतएव पूर्णा भविष्यति। अनेन संस्कृतेतिहासे नवीनयुगारम्भः अपि भवति। अतः सर्वे संस्कृत-विद्वांसः ईश्वराज्ञां शिरसा संप्रधार्य सर्वतो-भावेन संस्कृतोन्नत्यै यतमानाः स्युः। वेदभाषायां प्राचीनसंस्कृत-साहित्ये एवमेव आधुनिकसंस्कृतसाहित्ये "असंहिता-वाक्ये" मूलमन्त्रः तिष्ठेत्, येन अस्माकं ऋषिमुनिप्रदत्तं ज्ञानं वेदज्ञानं च भूयः संसारे प्रसरेत्। सर्वे विद्वांसः इदं सर्वं विचारयेयुः तथा यत् उचितं स्यात् तदेव निर्भीकतया संस्कृतहिताय कुर्युः॥

---

# अध्यायः ३

## 'चत्वारः लकाराः'

संस्कृत-व्याकरणानुसारं १० लकाराः सन्ति कालज्ञानाय। अद्यतन-अनद्यतन भेदं अवलम्ब्य इमे लकाराः विद्यन्ते। अतीतायाः रात्रेः अन्त्यस्य अर्द्धेन, भाविन्याः रात्रेः पूर्वस्य च अर्द्धेन सहितः कालः अद्यतनः। एतस्मात् भिन्नः अनद्यतनः। इमं भेदं अवलम्ब्य संसारस्य कस्यां अपि भाषायां कालविभागः न विद्यते। इदं सर्वथा अनावश्यकं अपि अस्ति। प्रायः विश्वस्य सर्वासु भाषासु भूत, भविष्यत्, वर्तमान कालज्ञानाय सामान्यतः क्रियाः प्रयुञ्जते वाक्येषु। प्रायः द्विवचनं अपि न विद्यते क्रियासु जर्मन-भाषादिकं विहाय।

दश लकारेषु लट् लकारः वर्तमानकालज्ञानाय प्रयुज्यते। लिट्, लङ्, लुङ् लकाराः भूतकाले प्रयुञ्जते। लुट्, लृट् लकारौ भविष्यत्काले प्रयुञ्जाते। लेट् लकारः वेदे प्रयुङ्क्ते। लोट्, लिङ् (विधिः) लिङ् (आशिषि) प्रायः विध्यादिषु प्रयुञ्जते। लृङ् लकारस्य हेतुहेतुमद्भावे प्रयोगः भवति। एतेषां सर्वेषां लकाराणां सामान्य-ज्ञानं अनेन भवितुं अर्हति—

(१) लट्- 'वर्तमाने लट्' (४०७)

व्याख्या-वर्तमानक्रिया-वृत्तेः धातोः लट् स्यात्।

(२) 'लिट्'- 'परोक्षे लिट्' (४२४)

व्याख्या-भूत-अनद्यतन-परोक्ष-अर्थवृत्तेः धातोः लिट् स्यात्।

(३) 'लुट्'- 'अनद्यतने लुट्' (४३५)

व्याख्या-भविष्यति अनद्यतने अर्थे धातोः लुट् स्यात्।

(४) 'लृट्'- 'लृट् शेषे च' (४४१)

व्याख्या-भविष्यदर्थात् धातोः लृट् स्यात् क्रियार्थायां क्रियायां सत्यां असत्यां च।

(५) 'लोट्'- 'लोट् च' (४४२)

व्याख्या-विधि, निमन्त्रण, आमन्त्रण, अधीष्ट, संप्रश्न, प्रार्थनादिषु अर्थेषु धातोः लोट् स्यात्।

(६) 'लङ्'- 'अनद्यतने लङ्' (४५७)

व्याख्या-अनद्यतनभूतार्थ-वृत्तेः धातोः लङ् स्यात्।

(७) 'लिङ्'- 'विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्न-प्रार्थनेषु लिङ्' (४६०)

व्याख्या-एषु अर्थेषु धातोः लिङ् स्यात्।

(८) 'लुङ्- 'लुङ्' (४६९)

व्याख्या-भूतार्थ-वृत्तेः धातोः लुङ् स्यात्।

(९) 'लृङ्'- 'लिङ् निमित्ते लृङ् क्रियातिपत्तौ' (४७७)

व्याख्या-हेतुहेतुमद्भावादि-लिङ्-निमित्तं तत्र भविष्यति अर्थे धातोः लृङ् स्यात् क्रियायाः अनिष्पत्तौ गम्यमानायाम्।

(१०) 'लेट्'- 'लिङर्थे लेट्' (३४२४) सिद्धान्तकौमुदी (वेद)

व्याख्या-विध्यादौ हेतुहेतुमद्भावादौ च धातोः लेट् स्यात् छन्दसि।

## काल-विचारः।

कालः अनवरतं वहति। तस्मिन् किञ्चित् व्यवधानं न अस्ति, येन इदं कथयेत् यत् अयं भूतकालः, अयं भविष्यत्काल। काल-स्वरूप· अनादिः। परं व्यवहारसौविध्याय कालविभागः क्रियते विद्वद्भि अर्थात् व्यावहारिकदृष्ट्या तस्य विभागः क्रियते। स्वरूपतः कालविभागः असम्भवः, परं आत्मने सौविध्याय व्यावहा-

*

रिकदृष्ट्या च तस्य विभागः भवति। अनेन सिद्धयति यत् तत् एव करणीयं यत् अस्माकं सौविध्याय भवेत्। वयं केवलं कल्पनां कुर्म यत् तत्कालः वर्तमानः यस्मिन् "वर्तमानत्वं प्रारब्धापरिसमाप्तक्रियाश्रयत्वं कालगतं बोध्यं (स्यात्)" भूतकालः स यस्मिन् "भूतत्व च वर्तमानध्वंसप्रतियोगिसमयवृत्तित्वं (ज्ञेयं स्यात्)" एवमेव भविष्यत्कालः स यस्मिन् भविष्यत्वं वर्तमानप्रागभाव प्रतियोगिसमयवृत्तित्वं (ज्ञेयं स्यात्)"। अस्मिन् विचार अपि व्यवधानं न विद्यते। अतएव वर्तमान, भूत, भविष्यत्कालेषु अद्यतन–अनद्यतनभेदं अवलम्ब्य भेद–कारणं योग्यं न अस्ति। अनेन सिद्धयति यत् एकः लकारः वर्तमाने, एकः लकारः भूतकाले, एकः लकारः भविष्यत्काले प्रयुक्तः स्यात्। परं संस्कृतव्याकरणे त्रिलकाराः भूतकाले प्रयुज्यन्ते यथा लिट्, लङ्, लुङ्। लेट् वेदे प्रयुक्तः भवति विध्यादिषु। लोट् तथा लिङ् द्वौ लकारौ विध्यादिषु प्रयुज्येते। लिङ् आशिषि अपि प्रयुक्तः भवति यस्य रूपाणि पृथक् चलन्ति। लुट् लृट् भविष्यत्काले तथा लृङ् हेतुहेतुमद्भावे प्रयुक्तः भवति।

अनया व्याख्यया सिद्धं भविष्यति यत् भूतकाले त्रिलकाराणां आवश्यकता न अस्ति। एवमेव भविष्यत्काले त्रिलकाराणां आवश्यकता न विद्यते। केवलं एकैकः लकारः भूत–भविष्यत्काले च पर्याप्तः यथा लृट्, लङ् अथवा लुङ्। विध्यादिषु अर्थात् लोट्, लिङ् लकारयोः स्थाने लिङ् तिष्ठेत्। आशिषि लिङ् लकारस्य आवश्यकता न अस्ति। हेतुहेतुमद्भावे लिङ् (विधिः) लकारः प्रयुक्तः अवलोक्यते यथा महाभारते। अतएव भविष्यदर्थे हेतुहेतुमद्भावे लृङ् लकारस्य आवश्यकता न विद्यते। लेट् लकारः वेदे तिष्ठतु। वय तु अत्र लौकिक–संस्कृतं विचारयामः, येन तत् राष्ट्रभाषात्वं राजभाषात्वं च प्राप्नुयात्। अतएव लौकिक-संस्कृते केवलं चतुर्लकाराः पर्याप्ताः यथा—

(१) वर्तमाने लट्
(२) भूतकाले लङ् लुङ् वा
(३) भविष्यत्काले लट्
(४) विध्यादिषु हेतुहेतुमद्भावे च लिङ्

अस्माकं मतेन सह देशस्य बहवः विद्वांसः सहमताः सन्ति। ते अपि अनुभवन्ति यत् यथा संस्कृतं वाक्य-पदेषु सन्धिकारणात् अत्यन्तं कठिनं सञ्जातम्, तथा एव दशलकार-कारणात् अपि संस्कृते वर्णनातीतं काठिन्यं सञ्जातम्। एते लकाराः कस्यां अपि भाषायां न विद्यन्ते पूर्वं निवेदितं अस्माभिः। प्रायः विद्वान् अपि एकस्य धातोः सर्वाणि रूपाणि स्मर्तुं न शक्नोति तदा का कथा बालकानां प्रारम्भिकशिक्षार्थिनाम्। अनेन संस्कृतस्य प्रचारः शनैः शनैः देशे न्यूनातिन्यूनः अभवत्। एकं दिनं आगन्तुं शक्नोति यदा लोपः स्यात्। अतएव विद्वद्भिः अयं प्रश्नः गम्भीरतया विचारणीयः। सर्वे जानन्ति एव यत् व्यवहारकाले अद्यतन-अनद्यतनभेदं अवलम्ब्य लकाराणां प्रयोगः न क्रियते विद्वद्भिः अपि। वस्तुतः इदं सर्वं अनावश्यकं अव्यावहारिकं अस्ति, तथा लोके न सम्भवति। केवलं पाण्डित्य-प्रदर्शनात् तु लोके कार्यं न चलिष्यति न चलति एव।

सर्वेषु लकारेषु एवमेव णिच्-सन्नन्त-यङ्-नियादि-क्रिया-विभागेषु अत्र 'डुकृञ्' (करणे) धातोः सर्वाणि रूपाणि दीयन्ते, येन संस्कृत-काठिन्यस्य सम्यग्रूपेण बोधः स्यात्। 'डुकृञ्' धातुः उभयपदी विद्यते अर्थात् परस्मैपदी आत्मनेपदी च, अतएव उभयपदि-रूपाणि अस्य धातोः भविष्यन्ति। तानि सर्वाणि प्रायः २५१० रूपाणि भविष्यन्ति। सर्वे धातवः १९४४ सन्ति। यदि अर्द्धधातवः परस्मैपदी आत्मनेपदी च मन्येरन् तथा

अर्द्ध-धातवः उभयपदी मन्येरन् तदा एतेषां सर्वेषां धातूनां रूपाणि प्रायः ३६ लक्षकानि भविष्यन्ति। एकस्य धातोः अपि यदा सर्वाणि प्रायः २५१२ रूपाणि कश्चित् पुरुषः स्मर्तुं कण्ठस्थी-कर्तुं वा न शक्नोति तदा कथं स वराकः ३६ लक्षकानि रूपाणि हृदयाङ्गी-कर्तुं शक्ष्यति। कस्यचित् सामान्य पुरुषस्य एतावती स्मरणशक्तिः भवितुं न अर्हति। इदं सर्वं अत्र स्पष्टी-क्रियते। संस्कृतस्य काठिन्यात् विद्यार्थिनः स्कूल-कालिजेषु विद्यालय-महाविद्यालयेषु संस्कृतं पाठ्यविषयेषु न गृह्णन्ति। अत्र 'डुकृञ्' धातोः रूपाणि दीयन्ते—

## 'डुकृञ्' धातोः रूपाणि।

### ( संस्कृतस्य काठिन्यस्य भीषणं रूपम् )

कर्तृवाच्ये—

परस्मैपदे (लट्) आत्मनेपदे

करोति, कुरुतः, कुर्वन्ति। कुरुते, कुर्वाते, कुर्वते।
करोषि, कुरुथः, कुरुथ। कुरुषे, कुर्वाथे, कुरुध्वे।
करोमि, कुर्वः, कुर्मः। कुर्वे, कुर्वहे, कुर्महे।

(लिट्)

चकार, चक्रतुः, चक्रुः। चक्रे, चक्राते, चक्रिरे।
चकर्थ, चक्रथुः, चक्र। चकृषे, चक्राथे, चकृढ्वे।
चकार, चकृव। चकृम। चक्रे, चकृवहे चकृमहे।
चकर,

(लुट्)

कर्त्ता, कर्त्तारौ, कर्त्तारः। कर्त्ता, कर्त्तारौ, कर्त्तारः।
कर्त्तासि, कर्त्तास्थः, कर्त्तास्थ। कर्त्तासे, कर्त्तासाथे, कर्त्ताध्वे।
कर्त्तास्मि, कर्त्तास्वः, कर्त्तास्मः। कर्त्ताहे, कर्त्तास्वहे, कर्त्तास्महे।

परस्मैपदे (लृट्) आत्मनेपदे

करिष्यति, करिष्यतः, करिष्यन्ति। करिष्यते, करिष्येते, करिष्यन्ते।
करिष्यसि, करिष्यथः, करिष्यथ। करिष्यसे, करिष्येथे, करिष्यध्वे।
करिष्यामि, करिष्यावः, करिष्यामः। करिष्ये, करिष्यावहे, करिष्यामहे।

(लोट्)

करोतु-कुरुतात्, कुरुताम्, कुर्वन्तु। कुरुताम्, कुर्वाताम्, कुर्वताम्।
कुरु-कुरुतात्, कुरुतम्, कुरुत। कुरुष्व, कुर्वाथाम्, कुरुध्वम्।
करवाणि, करवाव, करवाम। करवै, करवावहै, करवामहै।

(लङ्)

अकरोत्, अकुरुताम्, अकुर्वन्। अकुरुत, अकुर्वाताम्, अकुर्वत।
अकरोः, अकुरुतम्, अकुरुत। अकुरुथाः, अकुर्वाथाम्, अकुरुध्वम्।
अकरवम्, अकुर्व, अकुर्म। अकुर्वि, अकुर्वहि, अकुर्महि।

(लिङ्)

कुर्यात्, कुर्याताम् कुर्युः। कुर्वीत, कुर्वीयाताम्, कुर्वीरन्।
कुर्याः, कुर्यातम्, कुर्यात। कुर्वीथाः, कुर्वीयाथाम्, कुर्वीध्वम्।
कुर्याम्, कुर्याव, कुर्याम। कुर्वीय, कुर्वीवहि, कुर्वीमहि।

(आशीर्लिङ्)

क्रियात्, क्रियास्ताम्, क्रियासुः। कृषीष्ट, कृषीयास्ताम्, कृषीरन्
क्रियाः, क्रियास्तम्, क्रियास्त। कृषीष्ठाः, कृषीयास्थाम् कृषीढ्वम्
क्रियासम्, क्रियास्व क्रियास्म। कृषीय, कृषीवहि, कृषीमहि

(लुङ्)

अकार्षीत्, अकार्ष्टाम् अकार्षुः। अकृत, अकृषाताम्, अकृषत।
अकार्षीः, अकार्ष्टम्, अकार्ष्ट। अकृथाः, अकृषाथाम्, अकृढ्वम्।
अकार्षम्, अकार्ष्व, अकार्ष्म। अकृषि, अकृष्वहि, अकृष्महि।

परस्मैपदे (लृङ्) आत्मनेपदे

| परस्मैपदे | आत्मनेपदे |
|---|---|
| अकरिष्यत्, अकरिष्यताम्, अकरिष्यन् | अकरिष्यत, अकरिष्येताम्, अकरिष्यन्त। |
| अकरिष्यः, अकरिष्यतम्, अकरिष्यत, | अकरिष्यथाः, अकरिष्येथाम्, अकरिष्यध्वम् |
| अकरिष्यम्, अकरिष्याव, अकरिष्याम। | अकरिष्ये, अकरिष्यावहि, अकरिष्यामहि। |

कर्मवाच्ये—

(लट्)

क्रियते, क्रियेते, क्रियन्ते। आत्मनेपदे समानरूपाणि
क्रियसे, क्रियेथे, क्रियध्वे। भवन्ति।
क्रिये, क्रियावहे, क्रियामहे।

(लिट्)

चक्रे, चक्राते, चक्रिरे।
चकृषे, चक्राथे, चकृढ्वे। ,, ,,
चक्रे, चकृवहे, चकृमहे।

(लुट्)

| | | |
|---|---|---|
| कारिता, | कारितारौ, | कारितारः |
| कर्ता, | कर्तारौ, | कर्तारः |
| कारितासे, | कारितासाथे, | कारिताध्वे |
| कर्तासे, | कर्तासाथे, | कर्ताध्वे |
| कारिताहे, | कारितास्वहे, | कारितास्महे |
| कर्ताहे, | कर्तास्वहे, | कर्तास्महे |

सूचना—आत्मनेपदे समानरूपाणि भवन्ति।

(लृट्)

| | | |
|---|---|---|
| कारिष्यते- | कारिष्येते- | कारिष्यन्ते- |
| करिष्यते, | करिष्येते, | करिष्यन्ते |
| कारिष्यथे- | कारिष्येथे- | कारिष्यध्वे- |
| करिष्यथे, | करिष्येथे, | करिष्यध्वे |
| कारिष्ये- | कारिष्यावहे- | कारिष्यामहे |
| करिष्ये, | करिष्यावहे, | करिष्यामहे |

सूचना—आत्मनेपदे समानरूपाणि भवन्ति।

(लोट्)

| | | |
|---|---|---|
| क्रियताम्, | क्रियेताम्, | क्रियन्ताम् |
| क्रियस्व, | क्रियेथाम्, | क्रियध्वम् |
| क्रियै, | क्रियावहै, | क्रियामहै |

(लङ्)

| | | |
|---|---|---|
| अक्रियत, | अक्रियेताम्, | अक्रियन्त |
| अक्रियथाः, | अक्रियेथाम्, | अक्रियध्वम् |
| अक्रिये, | अक्रियावहि, | अक्रियामहि |

सूचना— आत्मनेपदे समानरूपाणि भवन्ति।

(लिङ्)

| | | |
|---|---|---|
| क्रियेत, | क्रियेयाताम्, | क्रियेरन् |
| क्रियेथाः, | क्रियेयाथाम्, | क्रियेध्वम् |
| क्रियेय, | क्रियेवहि, | क्रियेमहि |

सूचना— आत्मनेपदे समानरूपाणि भवन्ति।

(आशीर्लिङ्)

| | | |
|---|---|---|
| कारिषीष्ट, | कारिषीयास्ताम्, | कारिषीरन् |
| कारिषीष्ठाः, | कारिषीयास्थाम्, | कारिषीढ्वम्, कारिषीध्वम् |
| कारिषीय, | कारिषीवहि, | कारिषीमहि |

| | | | |
|---|---|---|---|
| कृषीष्ट, | कृषीयास्ताम्, | कृषीरन् | |
| कृषीष्ठाः, | कृषीयास्थाम्, | कृषीढ्वम् | |
| कृषीय, | कृषीवहि, | कृषीमहि | |

सूचना— आत्मनेपदे समानरूपाणि भवन्ति।

( लुङ् )

| | | | |
|---|---|---|---|
| अकारि, | अकारिषाताम्, | अकारिषत | |
| अकारिथाः, | अकारिषाथाम्, | अकारिढ्वम्, | अकारिध्वम् |
| अकारिषि, | अकारिष्वहि, | अकारिष्महि | |
| अकारि | अकृषाताम्, | अकृषत | |
| अकृथाः, | अकृषाथाम्, | अकृढ्वम् | |
| अकृषि, | अकृष्वहि, | अकृष्महि | |

सूचना—आत्मनेपदे समानरूपाणि भवन्ति।

( लृङ् )

| | | |
|---|---|---|
| अकारिष्यत, | अकारिष्येताम्, | अकारिष्यन्त |
| अकारिष्यथाः, | अकारिष्येथाम्, | अकारिष्यध्वम् |
| अकारिष्ये, | अकारिष्यावहि, | अकारिष्यामहि |
| अकरिष्यत, | अकरिष्येताम्, | अकरिष्यन्त |
| अकरिष्यथाः, | अकरिष्येथाम्, | अकरिष्यध्वम् |
| अकरिष्ये, | अकरिष्यावहि, | अकरिष्यामहि |

सूचनाः—आत्मनेपदे समानरूपाणि भवन्ति।

प्रेरणार्थे—णिच् प्रत्यये--परस्मैपदे

| | | |
|---|---|---|
| कारयति, | कारयतः, | कारयन्ति |
| कारयसि, | कारयथः, | कारयथ |
| कारयामि, | कारयावः, | कारयामः |

आत्मनेपदे

| | | |
|---|---|---|
| कारयत, | कारयेते, | कारयन्ते |
| कारयसे, | कारयेथे, | कारयध्वे |
| कारये, | कारयावहे, | कारयामहे |

( लिट् ) परस्मैपदे

| | | |
|---|---|---|
| कारयाञ्चकार, | कारयाञ्चक्रतुः, | कारयाञ्चक्रुः |
| कारयाञ्चकर्थ, | कारयाञ्चक्रथुः, | कारयाञ्चक्र |
| कारयाञ्चकार- | कारयाञ्चकृव, | कारयाञ्चकृम |
| कारयाञ्चकर, | | |

परसवर्ण-विकल्पे

| | | |
|---|---|---|
| कारयांचकार, | कारयांचक्रतु, | कारयांचक्रुः |
| कारयांचकर्थ, | कारयांचक्रथु, | कारयांचक्र |
| कारयांचकार- | कारयांचकृव, | कारयांचकृम |
| कारयांचकर, | | |
| कारयाम्बभूव, | कारयाम्बभूवतुः, | कारयाम्बभूवुः |
| कारयाम्बभूविथ, | कारयाम्बभूवथुः, | कारयाम्बभूव |
| कारयाम्बभूव, | कारयाम्बभूविव, | कारयाम्बभूविम |

परसवर्ण-विकल्पे

| | | |
|---|---|---|
| कारयांबभूव | कारयांबभूवतुः, | कारयांबभूवुः |
| कारयांबभूविथ, | कारयांबभूवथुः, | कारयांबभूव |
| कारयांबभूव, | कारयांबभूविव, | कारयांबभूविम |
| कारयामास, | कारयामासतुः | कारयामासुः |
| कारयामासिथ, | कारयामासथुः, | कारयामास |
| कारयामास, | कारयामासिव, | कारयामासिम |

आत्मनेपदे

| | | |
|---|---|---|
| कारयाञ्चक्रे, | कारयाञ्चक्राते, | कारयाञ्चक्रिरे |
| कारयाञ्चकृषे, | कारयाञ्चक्राथे, | कारयाञ्चकृढ्वे |
| कारयाञ्चक्रे, | कारयाञ्चकृवहे, | कारयाञ्चकृमहे |

परसवर्ण-विकल्पे

| | | |
|---|---|---|
| कारयांचक्रे, | कारयांचक्राते, | कारयांचक्रिरे |
| कारयांचकृषे, | कारयांचक्राथे, | कारयांचकृढ्वे |
| कारयांचक्रे, | कारयांचकृवहे, | कारयांचकृमहे |
| कारयाम्बभूव, | कारयाम्बभूवतुः | कारयाम्बभूवुः |
| कारयाम्बभूविथ, | कारयाम्बभूवथुः, | कारयाम्बभूव |
| कारयाम्बभूव, | कारयाम्बभूविव | कारयाम्बभूविम |

परसवर्ण-विकल्पे

| | | |
|---|---|---|
| कारयांबभूव, | कारयांबभूवतुः, | कारयांबभूवुः |
| कारयांबभूविथ, | कारयांबभूवथुः, | कारयांबभूव |
| कारयांबभूव, | कारयांबभूविव, | कारयांबभूविम |
| कारयामास, | कारयामासतुः, | कारयामासुः |
| कारयामासिथ, | कारयामासथुः, | कारयामास |
| कारयामास, | कारयामासिव, | कारयामासिम |

( लुट् ) परस्मैपदे

| | | |
|---|---|---|
| कारयिता, | कारयितारौ, | कारयितारः |
| कारयितासि, | कारयितास्थः, | कारयितास्थ |
| कारयितास्मि, | कारयितास्वः, | कारयितास्मः |

आत्मनेपदे

| | | |
|---|---|---|
| कारयिता, | कारयितारौ, | कारयितारः |
| कारयितासे, | कारयितासाथे, | कारयिताध्वे |
| कारयिताहे, | कारयितास्वहे, | कारयितास्महे |

(लृट्)

| | | |
|---|---|---|
| कारयिष्यति, | कारयिष्यतः | कारयिष्यन्ति |
| कारयिष्यसि, | कारयिष्यथः, | कारयिष्यथ |
| कारयिष्यामि, | कारयिष्यावः, | कारयिष्यामः |

आत्मनेपदे

| | | |
|---|---|---|
| कारयिष्यते, | कारयिष्येते, | कारयिष्यन्ते |
| कारयिष्यसे, | कारयिष्येथे, | कारयिष्यध्वे |
| कारयिष्ये, | कारयिष्यावहे, | कारयिष्यामहे |

(लोट्) परस्मैपदे

| | | |
|---|---|---|
| कारयतु,-कारयतात् | कारयताम्, | कारयन्तु |
| कारय-कारयतात् | कारयतम्, | कारयत |
| कारयामि, | कारयाव, | कारयाम |

आत्मनेपदे

| | | |
|---|---|---|
| कारयताम्, | कारयेताम्, | कारयन्ताम् |
| कारयस्व, | कारयेथाम्, | कारयध्वम् |
| कारयै, | कारयावहै, | कारयामहै |

(लङ्) परस्मैपदे

| | | |
|---|---|---|
| अकारयत्, | अकारयताम्, | अकारयन् |
| अकारय, | अकारयतम्, | अकारयत |
| अकारयम्, | अकारयाव, | अकारयाम |

आत्मनेपदे

| | | |
|---|---|---|
| अकारयत, | अकारयेताम्, | अकारयन्त |
| अकारयथाः, | अकारयेथाम्, | अकारयध्वम् |
| अकारये, | अकारयावहि, | अकारयामहि |

( लिङ् ) परस्मैपदे

| | | |
|---|---|---|
| कारयेत्, | कारयेताम्, | कारयेयुः |
| कारयेः, | कारयेतम्, | कारयेत |
| कारयेयम्, | कारयेव, | कारयेम |

आत्मनेपदे

| | | |
|---|---|---|
| कारयेत, | कारयेयाताम्, | कारयेरन् |
| कारयेथाः, | कारयेयाथाम्, | कारयेध्वम् |
| कारयेय, | कारयेवहि, | कारयेमहि |

( आशीर्लिङ् ) परस्मैपदे

| | | |
|---|---|---|
| कार्यात्, | कार्यास्ताम्, | कार्यासुः |
| कार्याः, | कार्यास्तम्, | कार्यास्त |
| कार्यासम्, | कार्यास्व, | कार्यास्म |

आत्मनेपदे

| | | |
|---|---|---|
| कारयिषीष्ट, | कारयिषीयास्ताम्, | कारयिषीरन् |
| कारयिषीष्ठाः, | कारयिषीयास्थाम्, | कारयिषीढ्वम्–कारयिषीध्वम् |
| कारयिषीय, | कारयिषीष्वहि, | कारयिषीष्महि |

( लुङ् ) परस्मैपदे

| | | |
|---|---|---|
| अचीकरत्, | अचीकरताम्, | अचीकरन् |
| अचीकरः, | अचीकरतम्, | अचीकरत |
| अचीकरम्, | अचीकराव, | अचीकराम |

आत्मनेपदे

| | | |
|---|---|---|
| अचीकरत, | अचीकरेताम्, | अचीकरन्त |
| अचीकरथाः, | अचीकरेथाम्, | अचीकरध्वम् |
| अचीकरे, | अचीकरावहि, | अचीकरामहि |

( लृङ् ) परस्मैपदे

| | | |
|---|---|---|
| अकारयिष्यत्, | अकारयिष्यताम्, | अकारयिष्यन् |
| अकारयिष्य , | अकारयिष्यतम्, | अकारयिष्यत |
| अकारयिष्यम्, | अकारयिष्याव, | अकारयिष्याम |

आत्मनेपदे

| | | |
|---|---|---|
| अकारयिष्यत, | अकारयिष्येताम्, | अकारयिष्यन्त |
| अकारयिष्यथाः, | अकारयिष्येथाम्, | अकारयिष्यध्वम् |
| अकारयिष्ये, | अकारयिष्यावहि, | अकारयिष्यामहि |

णिजन्तस्य 'कृ' धातोः कर्मवाच्ये रूपाणि ।

( लट् )

| | | |
|---|---|---|
| कार्यते, | कार्येते, | कार्यन्ते |
| कार्यसे, | कार्येथे, | कार्यध्वे |
| कार्ये, | कार्यावहे, | कार्यामहे |

( लिट् )

| | | |
|---|---|---|
| कारयाञ्चक्रे, | कारयाञ्चक्राते, | कारयाञ्चक्रिरे |
| कारयाञ्चकृषे, | कारयाञ्चक्राथे, | कारयाञ्चकृढ्वे |
| कारयाञ्चक्रे | कारयाञ्चकृवहे, | कारयाञ्चकृमहे |

एवमेव परसवर्ण विकल्पपक्षे अनुस्वारस्य विशिष्ट रूपाणि ।

| | | |
|---|---|---|
| कारयाम्बभूवे, | कारयाम्बभूवाते, | कारयाम्बभूविरे |
| कारयाम्बभूविषे, | कारयाम्बभूवाथे, | कारयाम्बभूविध्वे |
| कारयाम्बभूवे, | कारयाम्बभूविवहे, | कारयाम्बभूविमहे |

एवमेव परसवर्ण विकल्पपक्षे अनुस्वारविशिष्टस्य रूपाणि ।

| | | |
|---|---|---|
| कारयामासे, | कारयामासाते, | कारयामासिरे । |
| कारयामासिषे, | कारयामासाथे, | कारयामासिध्वे । |
| कारयामासे, | कारयामासिवहे, | कारयामासिमहे । |

(लुट्)

| | | |
|---|---|---|
| कारिता, | कारितारौ, | कारितारः । |
| कारितासे, | कारितासाथे, | कारिताध्वे । |
| कारिताहे, | कारितास्वहे, | कारितास्महे । |
| कारयिता, | कारयितारौ, | कारयितारः । |
| कारयितासे, | कारयितासाथे, | कारयिताध्वे । |
| कारयिताहे, | कारयितास्वहे, | कारयितास्महे । |

(लृट्)

| | | |
|---|---|---|
| कारिष्यते, | कारिष्येते, | कारिष्यन्ते । |
| कारिष्यसे, | कारिष्येथे, | कारिष्यध्वे । |
| कारिष्ये, | कारिष्यावहे, | कारिष्यामहे । |
| कारयिष्यते, | कारयिष्येते, | कारयिष्यन्ते । |
| कारयिष्यसे, | कारयिष्येथे, | कारयिष्यध्वे । |
| कारयिष्ये, | कारयिष्यावहे, | कारयिष्यामहे । |

(लोट्)

| | | |
|---|---|---|
| कार्यताम्, | कार्येताम्, | कार्यन्ताम् । |
| कार्यस्व, | कार्येथाम्, | कार्यध्वम् । |
| कार्यै, | कार्यावहै, | कार्यामहै । |

(लङ्)

| | | |
|---|---|---|
| अकार्यत, | अकार्येताम्, | अकार्यन्त । |
| अकार्यथाः, | अकार्येथाम्, | अकार्यध्वम् । |
| अकार्ये, | अकार्यावहि, | अकार्यामहि । |

(लिङ्)

| | | |
|---|---|---|
| कार्येत, | कार्येयाताम्, | कार्येरन् । |
| कार्येथाः, | कार्येयाथाम्, | कार्येध्वम् । |
| कार्येय, | कार्येवहि, | कार्येमहि । |

(आशीर्लिङ्)

| | | |
|---|---|---|
| कारिषीष्ट, | कारिषीयास्ताम्, | कारिषीरन् |
| कारिषीष्ठाः, | कारिषीयास्थाम्, | कारिषीढ्वम् कारिषीध्वम्। |
| कारिषीय, | कारिषीवहि, | कारिषीमहि। |
| कारयिषीष्ट, | कारयिषीयास्ताम्, | कारयिषीरन्। |
| कारयिषीष्ठा, | कारयिषीयास्थाम्, | कारयिषीढ्वम्—, कारयिषीध्वम्। |
| कारयिषीय, | कारयिषीवहि, | कारयिषीमहि। |

(लुङ्)

| | | |
|---|---|---|
| अकारि, | अकारिषाताम्, | अकारिषत। |
| अकारिष्ठाः, | अकारिषाथाम्, | अकारिढ्वम्-अकारिध्वम् |
| अकारिषि, | अकारिष्वहि, | अकारिष्महि। |
| अकारि, | अकारयिषाताम्, | अकारयिषत। |
| अकारयिष्ठाः, | अकारयिषाथाम्, | अकारयिढ्वम्— अकारयिध्वम् |
| अकारयिषि, | अकारयिष्वहि, | अकारयिष्महि। |

(लृङ्)

| | | |
|---|---|---|
| अकारयिष्यत, | अकारयिष्येताम्, | अकारयिष्यन्त। |
| अकारयिष्यथाः, | अकारयिष्येथाम्, | अकारयिष्यध्वम्। |
| अकारयिष्ये, | अकारयिष्यावहि, | अकारयिष्यामहि। |
| अकारिष्यत, | अकारिष्येताम्, | अकारिष्यन्त। |
| अकारिष्यथाः, | अकारिष्येथाम्, | अकारिष्यध्वम्। |
| अकारिष्ये, | अकारिष्यावहि, | अकारिष्यामहि। |

'कृ' धातोः सन् प्रत्ययेकृते रूपाणि।

(लट्)

| | | |
|---|---|---|
| चिकीर्षति, | चिकीर्षतः, | चिकीर्षन्ति। |
| चिकीर्षसि, | चिकीर्षथः, | चिकीर्षथ। |
| चिकीर्षामि, | चिकीर्षावः, | चिकीर्षामः। |

(लिट्)

| | | |
|---|---|---|
| चिचिकीर्ष, | चिचिकीर्षतुः, | चिचिकीर्षुः। |
| चिचिकीर्षिथ, | चिचिकीर्षथुः, | चिचिकीर्ष। |
| चिचिकीर्ष, | चिचिकीर्षिव, | चिचिकीर्षिम। |

(लुट्)

| | | |
|---|---|---|
| चिकीर्षिता, | चिकीर्षितारौ, | चिकीर्षितारः। |
| चिकीर्षितासि, | चिकीर्षितास्थः, | चिकीर्षितास्थ। |
| चिकीर्षितास्मि, | चिकीर्षितास्वः | चिकीर्षितास्मः। |

(लृट्)

| | | |
|---|---|---|
| चिकीर्षिष्यति, | चिकीर्षिष्यतः, | चिकीर्षिष्यन्ति। |
| चिकीर्षिष्यसि, | चिकीर्षिष्यथः, | चिकीर्षिष्यथ। |
| चिकीर्षिष्यामि, | चिकीर्षिष्यावः, | चिकीर्षिष्यामः। |

(लोट्)

| | | | |
|---|---|---|---|
| चिकीर्षतु— | चिकीर्षतात्, | चिकीर्षताम्, | चिकीर्षन्तु। |
| चिकीर्ष— | चिकीर्षतात्, | चिकीर्षतम्, | चिकीर्षत। |
| चिकीर्षाणि, | चिकीर्षाव, | चिकीर्षाम। | |

(लङ्)

| | | |
|---|---|---|
| अचिकीर्षत्, | अचिकीर्षताम्, | अचिकीर्षन्। |
| अचिकीर्षः, | अचिकीर्षतम्, | अचिकीर्षत। |
| अचिकीर्षम्, | अचिकीर्षाव, | अचिकीर्षाम। |

( लिङ् )

| | | |
|---|---|---|
| चिकीर्षेत्, | चिकीर्षेताम्, | चिकीर्षेयुः। |
| चिकीर्षे , | चिकीर्षेतम्, | चिकीर्षेत। |
| चिकीर्षेयम्, | चिकीर्षेव, | चिकीर्षेम। |

( आशीर्लिङ् )

| | | |
|---|---|---|
| चिकीर्ष्यात्, | चिकीर्ष्यास्ताम्, | चिकीर्ष्यासुः। |
| चिकीर्ष्याः, | चिकीर्ष्यास्तम्, | चिकीर्ष्यास्त। |
| चिकीर्ष्यासम्, | चिकीर्ष्यास्व, | चिकीर्ष्यास्म। |

( लुङ् )

| | | |
|---|---|---|
| अचिकीर्षीत, | अचिकीर्षिष्टाम्, | अचिकीर्षिषु। |
| अचिकीर्षी , | अचिकीर्षिष्टम्, | अचिकीर्षिष्ट। |
| अचिकीर्षिषम्, | अचिकीर्षिष्व, | अचिकीर्षिष्म। |

( लृङ् )

| | | |
|---|---|---|
| अचिकीर्षिष्यत्, | अचिकीर्षिष्यताम्, | अचिकीर्षिष्यन्। |
| अचिकीर्षिष्यः, | अचिकीर्षिष्यतम्, | अचिकीर्षिष्यत। |
| अचिकीर्षिष्यम्, | अचिकीर्षिष्याव, | अचिकीर्षिष्याम। |

कर्मवाच्ये

( लट् )

| | | |
|---|---|---|
| चिकीर्ष्यते, | चिकीर्ष्येते, | चिकीर्ष्यन्ते। |
| चिकीर्ष्यसे, | चिकीर्ष्येथे, | चिकीर्ष्यध्वे। |
| चिकीर्ष्ये, | चिकीर्ष्यावहे, | चिकीर्ष्यामहे। |

( लिट् )

| | | |
|---|---|---|
| चिकीर्षाञ्चक्रे, | चिकीर्षाञ्चक्राते, | चिकीर्षाञ्चक्रिरे। |
| चिकीर्षाञ्चकृषे, | चिकीर्षाञ्चक्राथे, | चिकीर्षाञ्चकृढ्वे। |
| चिकीर्षाञ्चक्रे | चिकीर्षाञ्चकृवहे, | चिकीर्षाञ्चकृमहे। |

❀

एवमेव परसवर्णविकल्पे अनुस्वारविशिष्टस्य रूपाणि ।

चिकीर्षाम्बभूवे, चिकीर्षाम्बभूवाते, चिकीर्षाम्बभूविरे ।
चिकीर्षाम्बभूविषे, चिकीर्षाम्बभूविवाथे, चिकीर्षाम्बभूविढ्वे ।
चिकीर्षाम्बभूवे, चिकीर्षाम्बभूविवहे, चिकीर्षाम्बभूविमहे ।

एवमेव परसवर्णविकल्पपक्षे अनुस्वार विशिष्टस्य रूपाणि ।

चिकीर्षामासे, चिकीर्षामासाते, चिकीर्षामासिरे
चिकीर्षामासिषे, चिकीर्षामासाथे, चिकीर्षामासिद्ध्वे
चिकीर्षामासे, चिकीर्षामासिवहे, चिकीर्षामासिमहे

(लुट्)

चिकीर्षिता, चिकीर्षितारौ, चिकीर्षितारः
चिकीर्षितासे, चिकीर्षितासाथे, चिकीर्षिताध्वे
चिकीर्षिताहे, चिकीर्षितास्वहे, चिकीर्षितास्महे

(लृट्)

चिकीर्षिष्यते, चिकीर्षिष्यते, चिकीर्षिष्यन्ते
चिकीर्षिष्यसे, चिकीर्षिष्येथे, चिकीर्षिष्यध्वे
चिकीर्षिष्ये, चिकीर्षिष्यावहे, चिकीर्षिष्यामहे

(लोट्)

चिकीर्ष्यताम्, चिकीर्ष्येताम्, चिकीर्षिर्ष्यन्ताम्
चिकीर्ष्यस्व, चिकीर्ष्येथाम्, चिकीर्ष्यध्वम्
चिकीर्ष्ये, चि कीर्ष्यावहै, चिकार्ष्यामहै

(लङ्)

अचिकीर्ष्यत, अचिकीर्ष्येताम्, अचिकीर्ष्यन्त
अचिकीर्ष्यथाः, अचिकीर्ष्येथाम्, अचिकीर्ष्यध्वम्
अचिकीर्ष्ये, अचिकीर्ष्यावाह, अचिकीर्ष्यामहि

(लिङ्)

| | | |
|---|---|---|
| चिकीर्ष्येत, | चिकीर्ष्येयाताम्, | चिकीर्ष्येरन् |
| चिकीर्ष्येथाः, | चिकीर्ष्येयाथाम्, | चिकीर्ष्येध्वम् |
| चिकीर्ष्येय, | चिकीर्ष्येवहि, | चिकीर्ष्येमहि |

(आशीर्लिङ्)

| | | |
|---|---|---|
| चिकीर्षिषीष्ट, | चिकीर्षिषीयास्ताम्, | चिकीर्षिषीरन् |
| चिकीर्षिषीष्ठाः, | चिकीर्षिषीयास्थाम्, | चिकीर्षिषीढ्वम् |
| चिकीर्षिषीय, | चिकीर्षिषीवहि, | चिकीर्षिषीमहि |

(लुङ्)

| | | |
|---|---|---|
| अचिकीर्षि, | अचिकीर्षिषाताम्, | अचिकीर्षिषत |
| अचिकीर्षिष्ठाः, | अचिकीर्षिषाथाम्, | अचिकीर्षिढ्वम् |
| अचिकीर्षिषि, | अचिकीर्षिष्वहि, | अचिकीर्षिष्महि |

(लृङ्)

| | | |
|---|---|---|
| अचिकीर्षिष्यत, | अचिकीर्षिष्येताम्, | अचिकीर्षिष्यन्त |
| अचिकीर्षिष्यथाः, | अचिकीर्षिष्येथाम्, | अचिकीर्षिष्यध्वम् |
| अचिकीर्षिष्ये, | अचिकीर्षिष्यावहि, | अचिकीर्षिष्यामहि |

पुनः पुनः अतिशयार्थं यङ् प्रत्यये रूपाणि।

आत्मनेपदे

(लट्)

| | | |
|---|---|---|
| चेक्रीयते, | चेक्रीयेते, | चेक्रीयन्ते |
| चेक्रीयसे, | चेक्रीयेथे, | चेक्रीयध्वे |
| चेक्रीये, | चेक्रीयावहे, | चेक्रीयामहे |

(लिट्)

| | | |
|---|---|---|
| चेक्रीयाञ्चक्रे, | चेक्रीयाञ्चक्राते, | चेक्रीयाञ्चक्रिरे |
| चेक्रीयाञ्चकृषे, | चेक्रीयाञ्चक्राथे, | चेक्रीयाञ्चकृढ्वे |
| चेक्रीयाञ्चक्रे, | चेक्रीयाञ्चकृवहे, | चेक्रीयाञ्चकृमहे |

एवमेव परसवर्णविकल्पपक्षे अनुस्वारविशिष्टस्य रूपाणि।

चेक्रीयाम्बभूव, चेक्रीयाम्बभूवतुः, चेक्रीयाम्बभूवुः
चेक्रीयाम्बभूविथ, चेक्रीयाम्बभूवथुः, चेक्रीयाम्बभूव
चेक्रीयाम्बभूव, चेक्रीयाम्बभूविव, चेक्रीयाम्बभूविम

एवमेव परसवर्णविकल्पपक्षे अनुस्वारविशिष्टस्य रूपाणि।

चेक्रीयामास, चेक्रीयामासतुः, चेक्रीयामासुः
चेक्रीयामासिथ, चेक्रीयामासथुः, चेक्रीयामास
चेक्रीयामास, चेक्रीयामासिव, चेक्रीयामासिम

(लुट्)

चेक्रीयिता, चेक्रीयितारौ, चेक्रीयितारः
चेक्रीयितासे, चेक्रीयितासाथे, चेक्रीयिताध्वे
चेक्रीयिताहे, चेक्रीयितास्वहे, चेक्रीयितास्महे

(लृट्)

चेक्रीयिष्यते, चेक्रीयिष्यते, चेक्रीयिष्यन्ते
चेक्रीयिष्यसे, चेक्रीयिष्येथे, चेक्रीयिष्यध्वे
चेक्रीयिष्ये, चेक्रीयिष्यावहे, चेक्रीयिष्यामहे

(लोट्)

चेक्रीयताम्, चेक्रीयेताम्, चेक्रीयन्ताम्
चेक्रीयस्व, चेक्रीयेथाम्, चेक्रीयध्वम्
चेक्रीयै, चेक्रीयावहै, चेक्रीयामहै

(लङ्)

अचेक्रीयत, अचेक्रीयेताम्, अचेक्रीयन्त
अचेक्रीयथाः, अचेक्रीयेथाम्, अचेक्रीयध्वम्
अचेक्रीये, अचेक्रीयावहि, अचेक्रीयामहि

( लिङ )

| | | |
|---|---|---|
| चेक्रीयेत, | चेक्रीयेयाताम्, | चक्रीयेरन् |
| चेक्रीयेथा, | चेक्रीयेयाथाम्, | चेक्रीयेध्वम् |
| चेक्रीयेय, | चेक्रीयेवहि, | चेक्रीयेमहि |

( आशीर्लिङ )

| | | |
|---|---|---|
| चेक्रीयिषीष्ट, | चेक्रीयिषीयास्ताम्, | चेक्रीयिषीरन् |
| चेक्रीयिषीष्ठाः, | चेक्रीयिषीयास्थाम्, | चेक्रीयिषीढ्वम् <br> चेक्रीयिषीध्वम् |
| चेक्रीयिषीय, | चेक्रीयिषीवहि, | चेक्रीयिषीमहि |

( लुङ् )

| | | |
|---|---|---|
| अचेक्रीयिष्ट | अचेक्रीयिषाताम्, | अचेक्रीयिषत |
| अचेक्रीयिष्ठाः, | अचेक्रीयिषाथाम्, | अचेक्रीयिढ्वम् <br> अचेक्रीयिध्वम् |
| अचेक्रीयिषि, | अचेक्रीयिष्वहि, | अचेक्रीयिष्महि |

( लृङ् )

| | | |
|---|---|---|
| अचेक्रीयिष्यत, | अचेक्रीयिष्येताम्, | अचेक्रीयिष्यन्त |
| अचेक्रीयिष्यथाः, | अचेक्रीयिष्येथाम्, | अचेक्रीयिष्यध्वम् |
| अचेक्रीयिष्ये, | अचेक्रीयिष्यावहि, | अचेक्रीयिष्यामहि |

कर्मवाच्ये—

( लट् )

| | | |
|---|---|---|
| चेक्रीय्यते, | चेक्रीय्येते, | चेक्रीय्यन्ते |
| चेक्रीय्यसे, | चेक्रीय्येथे, | चेक्रीय्यध्वे |
| चेक्रीय्ये, | चेक्रीय्यावहे, | चेक्रीय्यामहे |

( लिट् )

चेक्रीयाञ्चक्रे, चेक्रीयाञ्चक्राते, चेक्रीयाञ्चक्रिरे
चेक्रीयाञ्चकृषे, चेक्रीयाञ्चक्राथे, चेक्रीयाञ्चकृढ्वे
चेक्रीयाञ्चक्रे, चेक्रीयाञ्चकृवहे, चेक्रीयाञ्चकृमहे

एवमेव परसवर्णविकल्पपक्षे अनुस्वारविशिष्टस्य रूपाणि ।

चेक्रीयाम्बभूवे, चेक्रीयाम्बभूवाते, चेक्रीयाम्बभूविरे
चेक्रीयाम्बभूविषे, चेक्रीयाम्बभूवाथे, चेक्रीयाम्बभूविध्वे
चेक्रीयाम्बभूवे, चेक्रीयाम्बभूविवहे, चेक्रीयाम्बभूविमहे

एवमेव परसवर्णविकल्पपक्षे अनुस्वारविशिष्टस्य रूपाणि ।

चेक्रीयामासे, चेक्रीयामासाते, चेक्रीयामासिरे
चेक्रीयामासिषे, चेक्रीयामासाथे, चेक्रीयामासिध्वे
चेक्रीयामासे, चेक्रीयामासिवहे, चेक्रीयामासिमहे

( लुट् )

चेक्रीयिता, चेक्रीयितारौ, चेक्रीयितारः
चेक्रीयितासे, चेक्रीयितासाथे, चेक्रीयिताध्वे
चेक्रीयिताहे, चेक्रीयितास्वहे, चेक्रीयितास्महे

( लृट् )

चेक्रीयिष्यते, चेक्रीयिष्येते, चेक्रीयिष्यन्ते
चेक्रीयिष्यसे, चेक्रीयिष्येथे, चेक्रीयिष्यध्वे
चेक्रीयिष्ये, चेक्रीयिष्यावहे, चेक्रीयिष्यामहे

( लोट् )

चेक्रीय्यताम्, चेक्रीय्येताम्, चेक्रीय्यन्ताम्
चेक्रीय्यस्व, चेक्रीय्येथाम्, चेक्रीय्यध्वम्
चेक्रीय्यै, चेक्रीय्यावहै, चेक्रीय्यामहै

( लङ् )

| | | |
|---|---|---|
| अचेक्रीय्यत, | अचेक्रीय्येताम्, | अचेक्रीय्यन्त |
| अचेक्रीय्यथाः, | अचेक्रीय्येथाम्, | अचेक्रीय्यध्वम् |
| अचेक्रीय्ये, | अचेक्रीय्यावहि, | अचेक्रीय्यामहि |

( लिङ् )

| | | |
|---|---|---|
| चेक्रीय्येत, | चेक्रीय्येयाताम्, | चेक्रीय्येरन् |
| चेक्रीय्येथाः, | चेक्रीय्येयाथाम्, | चेक्रीय्येध्वम् |
| चेक्रीय्येय, | चेक्रीय्येवहि, | चेक्रीय्येमहि |

( आशीर्लिङ् )

| | | |
|---|---|---|
| चेक्रीयिषीष्ट, | चेक्रीयिषीयास्ताम्, | चेक्रीयिषीरन् |
| चेक्रीयिषीष्ठाः, | चेक्रीयिषीयास्थाम्, | चेक्रीयिषीढ्वम्<br>चेक्रीयिषीध्वम |
| चेक्रीयिषीय, | चेक्रीयिषीवहि, | चेक्रीयिषीमहि |

(लुङ्)

| | | |
|---|---|---|
| अचेक्रीयिष्ट, | अचेक्रीयिषाताम्, | अचेक्रीयिषत |
| अचेक्रीयिष्ठा, | अचेक्रीयिषाथाम्, | अचेक्रीयिढ्वम्-<br>अचेक्रीयिध्वम् |
| अचेक्रीयिषि, | अचेक्रीयिष्वहि, | अचेक्रीयिष्महि |

(लृङ्)

| | | |
|---|---|---|
| अचेक्रीयिष्यत, | अचेक्रीयिष्येताम्, | अचेक्रीयिष्यन्त |
| अचेक्रीयिष्यथाः, | अचेक्रीयिष्येथाम्, | अचेक्रीयिष्यध्वम् |
| अचेक्रीयिष्ये, | अचेक्रीयिष्यावहि, | अचेक्रीयिष्यामहि |

'कृ'धातोः यङ्लुगन्ते रूपाणि। (परस्मैपदे)

(लट्)

| | | |
|---|---|---|
| (अ) चर्करीति, चर्कर्त्ति, | चर्कृत, | चर्कृति |
| चर्करीषि, चर्कर्षि, | चर्कृथः, | चर्कृथ |
| चर्करीमि, चर्कर्मि, | चर्कृवः, | चर्कृमः |

(आ) चरिकरीति, चरिकर्त्ति, चरिकृतः, चरिक्रति
चरिकरीषि, चरिकर्षि, चरिकृथः, चरिकृथ
चरिकरीमि, चरिकर्मि, चरिकृवः, चरिकृमः

(इ) चरीकरीति, चरीकर्त्ति, चरीकृतः, चरीक्रति
चरीकरीषि, चरीकर्षि, चरीकृथः, चरीकृथ
चरीकरीमि, चरीकर्मि, चरीकृवः, चरीकृमः

(लिट्)

चर्कराञ्चकार, चर्कराञ्चक्रतुः, चर्कराञ्चक्रुः
चर्कराञ्चकर्थ, चर्कराञ्चक्रथुः, चर्कराञ्चक्र
चर्कराञ्चकार-चर्कराञ्चकर, चर्कराञ्चकृव, चर्कराञ्चकृम

चरिकराञ्चकार, चरिकराञ्चक्रतुः, चरिकराञ्चक्रुः
चरिकराञ्चकर्थ, चरिकराञ्चक्रथुः, चरिकराञ्चक्र
चरिकराञ्चकार-चरिकराञ्चकर, चरिकराञ्चकृव, चरिकराञ्चकृम

चरीकराञ्चकार, चरीकराञ्चक्रतुः, चरीकराञ्चक्रुः
चरीकराञ्चकर्थ, चरीकराञ्चक्रथुः, चरीकराञ्चक्र
चरीकराञ्चकार-चरीकराञ्चकर, चरीकराञ्चकृव, चरीकराञ्चकृम

एवमेव परसवर्णविकल्पपक्षे अनुस्वारविशिष्टस्य रूपाणि ।
तथा-भू-अस् ,इत्यनयोः अनुप्रयोगे रूपाणि बोध्यानि ।

(लुट्)

चर्करिता, चर्करितारौ, चर्करितारः
चर्करितासि, चर्करितास्थः, चर्करितास्थ
चर्करितास्मि, चर्करितास्वः चर्करितास्मः

चरिकरिता, चरिकरितारौ, चरिकरितारः
चरिकरितासि, चरिकरितास्थः, चरिकरितास्थ
चरिकरितास्मि, चरिकरितास्वः चरिकरितास्मः

| | | |
|---|---|---|
| चरिकरीता, | चरीकारितारौ, | चरीकरितारः। |
| चरीकारितासि, | चरीकरितास्थः, | चरीकारितास्थ। |
| चरीकरितास्मि, | चरीकरितास्वः, | चरीकरितास्मः। |

(लृट्)

| | | |
|---|---|---|
| चर्करिष्यति, | चर्करिष्यत, | चर्करिष्यन्ति। |
| चर्करिष्यसि, | चर्करिष्यथः, | चर्करिष्यथ। |
| चर्करिष्यामि, | चर्करिष्याव, | चर्करिष्यामः। |
| चरिकरिष्यति, | चरिकरिष्यतः, | चरिकरिष्यन्ति। |
| चरिकरिष्यसि, | चरिकरिष्यथः, | चरिकरिष्यथ। |
| चरिकरिष्यामि, | चरिकरिष्यावः, | चरिकरिष्यामः। |
| चरीकरिष्यति, | चरीकरिष्यतः, | चरीकरिष्यन्ति। |
| चरीकरिष्यसि, | चरीकरिष्यथ, | चरीकरिष्यथ। |
| चरीकरिष्यामि, | चरीकरिष्याव, | चरीकरिष्यामः। |

(लोट्)

| | | |
|---|---|---|
| चर्करीतु-चर्कर्तु-चर्कृतात्, | चर्कृताम्, | चर्क्रतु |
| चर्कृहि-चर्कृतात्, | चर्कृतम्, | चर्कृत |
| चर्कराणि, | चर्कराव, | चर्कराम |
| चरिकरीतु-चरिकर्तु-चरिकृतात्, | चरिकृताम्, | चरिक्रतु |
| चरिकृहि-चरिकृतात्, | चरिकृतम्, | चरिकृत |
| चरिकराणि, | चरिकराव, | चरिकराम |
| चरीकरीतु-चरीकर्तु-चरीकृतात्, | चरीकृताम्, | चरीक्रतु |
| चरीकृहि-चरीकृतात्, | चरीकृतम्, | चरीकृत |
| चरीकराणि, | चरीकराव, | चरीकराम |

( लङ् )

| | | |
|---|---|---|
| अचर्करीत्-अचर्क:, | अचर्कृताम्, | अचर्कृः |
| अचर्करीः-अचर्कः, | अचर्कृतम्, | अचर्कृत |
| अचर्करम्, | अचर्कृव, | अचर्कृम |
| अचरिकरीत्-अचरिकः, | अचरिकृताम्, | अचरिकृः |
| अचरिकरीः-अचरिकः, | अचरिकृतम्, | अचरिकृत |
| अचरिकरम्, | अचरिकृव, | अचरिकृम |
| अचरीकरीत्-अचरीक, | अचरीकृताम्, | अचरिकृः |
| अचरीकरीः-अचरीक, | अचरीकृतम्, | अचरीकृत |
| अचरीकरम्, | अचरीकृव, | अचरीकृम |

( लिङ् )

| | | |
|---|---|---|
| चर्क्रियात्, | चकृयास्ताम्, | चर्क्रियासुः |
| चर्क्रियाः, | चर्क्रियास्तम्, | चर्क्रियास्त |
| चर्क्रियासम्, | चर्क्रियास्व, | चर्क्रियास्म |
| चरिक्रियात्, | चरिक्रियास्ताम् | चरिक्रियासुः |
| चरिक्रियाः | चरिक्रियास्तम् | चरिक्रियास्त |
| चरिक्रियासम्, | चरिक्रियास्व, | चरिक्रियास्म |

| | | |
|---|---|---|
| चरीकृयात्, | चरीकृयास्ताम्, | चरीकृयासुः |
| चरीकृया:, | चरीकृयास्तम्, | चरीकृयास्त |
| चरीकृयासम्, | चरीकृयास्व, | चरीकृयास्म |

( आशीर्लिङ् )

| | | |
|---|---|---|
| चर्क्रियात्, | चर्क्रियास्ताम्, | चर्क्रियासु |
| चर्क्रिया, | चर्क्रियास्तम्, | चर्क्रियास्त |
| चर्क्रियासम्, | चर्क्रियास्व, | चर्क्रियास्म |
| चरिक्रियात्, | चरिक्रियास्ताम्, | चरिक्रियासु: |
| चरिक्रिया, | चरिक्रियास्तम्, | चरिक्रियास्त |
| चरिक्रियासम्, | चरिक्रियास्व, | चरिक्रियास्म |
| चरीक्रियात्, | चरीक्रियास्ताम्, | चरीक्रियासु |
| चरीक्रिया, | चरीक्रियास्तम्, | चरीक्रियास्त |
| चरीक्रियासम्, | चरीक्रियास्व, | चरीक्रियास्म |

( लुङ् )

| | | |
|---|---|---|
| अचर्कारीत्, | अचर्कारिष्टाम्, | अचर्कारिषु |
| अचर्कारी, | अचर्कारिष्ट, | अचर्कारिष्ट |
| अचर्कारिषम्, | अचर्कारिष्व, | अचर्कारिष्म |
| अचरिकारीत्, | अचरिकारिष्टाम्, | अचरिकारिषुः |
| अचरिकारी | अचरिकारिष्टम्, | अचरिकारिष्ट |
| अचरिकारिषम्, | अचरिकारिष्व, | अचरिकारिष्म |
| अचरीकारीत्, | अचरीकारिष्टाम्, | अचरीकारिषु |
| अचरीकारी, | अचरीकारिष्टम्, | अचरीकारिष्ट |
| अचरीकारिषम्, | अचरीकारिष्याव, | अचरीकारिष्याम |

( लृङ् )

| | | |
|---|---|---|
| अचर्करिष्यत, | अचर्करिष्यताम्, | अचर्करिष्यन् |
| अचर्करिष्यः, | अचर्करिष्यतम्, | अचर्करिष्यत |
| अचर्करिष्यम्, | अचर्करिष्याव, | अचर्करिष्याम |
| अचरिकरिष्यत, | अचरिकरिष्यताम्, | अचरिकरिष्यन् |
| अचरिकरिष्यः, | अचरिकरिष्यतम्, | अचरिकरिष्यत |
| अचरिकरिष्यम्, | अचरिकरिष्याव, | अचरिकरिष्याम |
| अचरीकरिष्यत, | अचरीकरिष्यताम्, | अचरीकरिष्यन् |
| अचरीकरिष्यः, | अचरीकरिष्यतम्, | अचरीकरिष्यत |
| अचरीकरिष्यम्, | अचरीकरिष्याव, | अचरीकरिष्याम |

यङ् लुगन्तस्य कर्मवाच्ये आत्मनेपदे रूपाणि ।

( लट् )

| | | |
|---|---|---|
| चर्क्रीयते | चर्क्रीयेते | चर्क्रीयन्ते |
| चर्क्रीयसे | चर्क्रीयेथे | चर्क्रीयध्वे |
| चर्क्रीये | चर्क्रीयावहे | चर्क्रीयामहे |

( लिट् )

| | | |
|---|---|---|
| चर्कराञ्चक्रे | चर्कराञ्चक्राते | चर्कराञ्चक्रिरे |
| चर्कराञ्चकृषे, | चर्कराञ्चक्राथे, | चर्कराञ्चकृढ्वे |
| चर्कराञ्चक्रे, | चर्कराञ्चकृवहे, | चर्कराञ्चकृमहे |
| चरिकराञ्चक्रे, | चरिकराञ्चक्राते, | चरिकराञ्चक्रिरे |
| चरिकराञ्चकृषे, | चरिकराञ्चक्राथे, | चरिकराञ्चकृढ्वे |
| चरिकराञ्चक्रे, | चरिकराञ्चकृवहे, | चरिकराञ्चकृमहे |
| चरीकराञ्चक्रे, | चरीकराञ्चक्राते, | चरीकराञ्चक्रिरे |
| चरीकराञ्चकृषे, | चरीञ्चक्राथे, | चरीकराञ्चकृढ्वे |
| चरीकराञ्चक्रे, | चरीकराञ्चकृवहे, | चरीकराञ्चकृमहे |

एवमेव परसवर्णविकल्पपक्षे अनुस्वारविशिष्टस्य रूपाणि। तथा भू-अस्, इत्यनयो अनुप्रयोगे रूपाणि बोध्यानि।

( लुट् )

| | | |
|---|---|---|
| चर्कारिता, | चर्कारितारौ, | चर्कारितारः |
| चर्कारितासे, | चर्कारितासाथे, | चर्कारिताध्वे |
| चर्कारिताहे, | चर्कारितास्वहे, | चर्कारितास्महे |
| चर्करिता, | चर्करितारौ, | चर्करितारः |
| चर्करितासे, | चर्करितासाथे, | चर्करिताध्वे |
| चर्करिताहे, | चर्करितास्वहे, | चर्करितास्महे |
| चरिकारिता, | चरिकारितारौ, | चरिकारितार |
| चरिकारितासे, | चरिकारितासाथे, | चरिकारिताध्वे |
| चरिकारिताहे, | चरिकारितास्वहे, | चरिकारितास्महे |
| चरिकरिता, | चरिकरितारौ, | चरिकरितार |
| चरिकरितासे, | चरिकरितासाथे, | चरिकरिताध्वे |
| चरिकरिताहे, | चरिकरितास्वहे, | चरिकरितास्महे |
| चरीकारिता, | चरीकारितारौ, | चरीकारितार |
| चरीकारितासे, | चरीकारितासाथे | चरीकारिताध्वे |
| चरीकारिताहे, | चरीकारितास्वहे, | चरीकारितास्महे |
| चरीकरिता, | चरीकरितारौ, | चरीकरितार |
| चरीकरितासे, | चरीकरितासाथे, | चरीकरिताध्वे |
| चरीकरिताहे, | चरीकरितास्वहे, | चरीकारितास्महे |

( लृट् )

| | | |
|---|---|---|
| चर्कारिष्यते, | चर्कारिष्येते, | चर्कारिष्यन्ते |
| चर्कारिष्यसे, | चर्कारिष्येथे, | चर्कारिष्यध्वे |
| चर्कारिष्ये, | चर्कारिष्यावहे | चर्कारिष्यामहे |

सूचना —अस्मिन् लकारे ५४ रूपाणि भवन्ति।

( लोट् )

| | | |
|---|---|---|
| चर्क्रीयताम्, | चर्क्रीयेताम्, | चर्क्रीयन्ताम्। |
| चर्क्रीयस्व, | चर्क्रीयेथाम्, | चर्क्रीयध्वम्। |
| चर्क्रीयै, | चर्क्रीयावहै, | चर्क्रीयामहै। |

( लङ् )

| | | |
|---|---|---|
| अचर्क्रीयत, | अचर्क्रीयेताम्, | अचर्क्रीयन्त। |
| अचर्क्रीयथाः, | अचर्क्रीयेथाम्, | अचर्क्रीयध्वम्। |
| अचर्क्रीये, | अचर्क्रीयावहि, | अचर्क्रीयामहि। |

( लिङ् )

| | | |
|---|---|---|
| चर्क्रीयेत, | चर्क्रीयेयाताम्, | चर्क्रीयेरन्। |
| चर्क्रीयेथाः, | चर्क्रीयेयाथाम्, | चर्क्रीयेध्वम्। |
| चर्क्रीयेय, | चर्क्रीयेवहि, | चर्क्रीयेमहि। |

( आशीर्लिङ् )

| | | |
|---|---|---|
| चर्कारिषीष्ट, | चर्कारिषीयास्ताम्, | चर्कारिषीरन्। |
| चर्कारिषीष्ठाः, | चर्कारिषीयास्थाम्, | चर्कारिषीढ्वम्—<br>चर्कारिषीध्वम्। |
| चर्कारिषीय, | चर्कारिषीवहि, | चर्कारिषीमहि। |

( लुङ् )

| | | |
|---|---|---|
| चर्कारि, | चर्कारिषाताम्, | चर्कारिषत। |
| चर्कारिथाः, | चर्कारिषाथाम्, | चर्कारिढ्वम्—<br>चर्कारिध्वम्। |
| चर्कारिषि, | चर्कारिष्वहि, | चर्कारिष्महि। |

( लृङ् )

| | | |
|---|---|---|
| अचर्कारिष्यत, | अचर्कारिष्येताम्, | अचर्कारिष्यन्त। |
| अचर्कारिष्यथाः, | अच कारिष्येथाम्, | अचर्कारिष्यध्वम्। |
| अचर्कारिष्ये, | अचर्कारिष्यावहि, | अचर्कारिष्यामहि। |

सूचना—

(१) लट्, लट्, लोट्, लङ्, लिङ् (आशी) लुङ्, लृङ् लकारेषु (आर्धधातुके) चिण्वद्भाव-इट्-विकल्पपक्षे तथा रिक्, रीक् आगमे (सार्वधातुके) रिक, रीक् आगमे विविधानि रूपाणि भविष्यन्ति येषा संख्याः २३४ सन्ति।

(२) "कार्यं करोति" इति विग्रहे कार्ययति इदं रूप भवति। अस्य सर्वेषु लकारेषु कर्तृकर्मवाच्ये १८० रूपाणि भविष्यन्ति यथा 'कार्ययति, कार्ययत, कार्ययन्ति' इत्यादीनि कर्तृवाच्ये तथा कार्य्यते, कार्य्येते, कार्य्यन्ते इत्यादीनि कर्मवाच्ये।

(३) लेट् लकार- घेदे अनेन सूत्रेण " लिङर्थे लेट् " ३।१।३४

व्याख्या—विध्यादौ हेतुहेतुमद्भावादौ च धातो लेट स्यात् छन्दसि। लेट् लकारस्य इमानि रूपाणि भवन्ति परस्मैपदे आत्मनेपदे च (कर्तृवाच्ये)

कर्तृवाच्ये

'करवाति, करवात, करवान्ति' इत्यादीनि रूपाणि परस्मैपदे, 'करवाते, करवैते, करवान्ते' इत्यादीनि आत्मनेपदे भवन्ति। अट् आगमे तथा सिप् प्रत्यये कृते परस्मैपदे आत्मनेपदे च अनेन प्रकारेण यथा 'करवति कारिषत्,' एवमेव आत्मनेपदे 'करवते, कारिषते' इमानि रूपाणि भविष्यन्ति। इकारलोपस्य विकल्पेन त्रीणि त्रीणि रूपाणि अन्यानि भवन्ति तथा आत्मनेपदे एकारस्य ऐकारादेशे षट् रूपाणि अन्यानि भवन्ति, अनेन प्रकारेण सर्वाणि रूपाणि ८१ भविष्यन्ति।

(४) सूचना- कृ' धातो भूतकाले निष्ठायां अनेन सूत्रेण " निष्ठा' ३।२।१०२

व्याख्या- भूतार्थवृत्ते धातो निष्ठा स्यात्। अतएव सामान्य भूतकाले त्रिलिङ्गेषु निष्ठाया- प्रयोग भवति यथा-कृत, कृतम्,

कृता। कृतवान्, कृतवत्, कृतवती। अनेन प्रकारेण भूतकालबोधने निष्ठायाः त्रिलिङ्गेषु १४४ रूपाणि भविष्यन्ति।

(५) सूचना- शतृशानचोः प्रयोगः कालबोधने अनेन सूत्रेण भवति, "लटः शतृशानचावप्रथमासमानाधिकरणे" ३।२।१२४

व्याख्या— अप्रथमान्तेन सामानाधिकरण्ये सति लटः शतृशानचौ स्याताम्। शतृशानचोः त्रिलिङ्गेषु १४४ रूपाणि भविष्यन्ति यथा-कुर्वन्, कुर्वत्, कुर्वन्ती, कुर्वाणः, कुर्वाणम्, कुर्वाणा। अनेन सूत्रेण शतृशानचोः भविष्यदर्थे अपि प्रयोगः भवति।

"लृटः सद्वा" ३।३।१४

व्याख्या- लृटः शतृशानचौ वा स्याताम्। शतृशानचोः त्रिलिङ्गेषु १४४ रूपाणि भविष्यन्ति यथा-करिष्यन्, करिष्यत्, करिष्यन्ती, करिष्यमाणः, करिष्यमाणम्, करिष्यमाणा।

(६) आभ्यां सूत्राभ्यां कानच् क्वसोः प्रयोगः सामान्यभूतकाले भवति।

"लिटः कानज्वा" ३।२।१०६
"क्वसुश्च" ३।२।१०७

व्याख्या- भूतसामान्ये छन्दसि लिट् तस्य कानच् क्वसू स्याताम्।

स्पष्टीकरणम्

(१) 'कृ' धातोः पूर्वदत्तानां रूपाणां पठनात् इदं अवलोकयिष्यते ज्ञास्यते च पाठकैः यत्तस्य सर्वलकारेत्यादिषु कालबोधकेषु प्रायः २५१२ रूपाणि भवन्ति। इदं अपि अवलोकयिष्यते यत् विविधार्थेषु समानरूपाणि अपि चलन्ति एव। अह ज्ञातुं इच्छामि यत् का वराकः 'कृ' धातोः अपि इमानि सर्वाणि रूपाणि २५१२

संख्याकानि कण्ठस्थीकर्तुं शक्नोति ? कश्चित् पुरुषः ईदृशः भवेत् चेत् तदा एकेन द्वाभ्यां वा भवति किम् ? द्वितीयं सर्वे धातवः १९४४ संख्याकाः सन्ति। यदि एतेषां सर्वेषां रूपाणि दत्तानि स्युः तदा ३६ लक्षतः अधिकानि रूपाणि भविष्यन्ति। उदाहरणार्थं इदं मन्येत चेत् यत् १००० उभयपदि धातवः सन्ति, तदा तेषां २५, १२,००० रूपाणि भविष्यन्ति। ९४४ शेषधातवः 'एकपदी' स्युः, तदा तेषां ११, ८०,००० रूपाणि भविष्यन्ति। एतेषां सर्वयोगः ३६, ९२,००० भविष्यति; अर्थात् षट्त्रिंशत्-लक्ष द्वयाधिकनवति सहस्राणि रूपाणि भविष्यन्ति। इमानि रूपाणि तु प्रायः केवलं १९४४ धातूनां भविष्यन्ति। परं धातुतः कृत् तद्धितयोः संज्ञानां अपि रूपाणि चलन्ति। अनेन एकैकधातोः अनन्तानि रूपाणि भवन्ति क्रियायां संज्ञायां च।

लौकिक-संस्कृतस्य वर्णनातीतायाः कठिनतायाः इदं भयङ्कर-रूपम्। प्रायः सर्वैः संस्कृतज्ञैः इदं न अवबुध्यते। अहं विचारयामि यत् तेषु बुधाः अपि इदं सर्वं न विचारयन्ति। विरलाः जनाः संस्कृतस्य काठिन्यं चिन्तयन्ति, परं प्रायः ते अपि मौनं अवलम्बन्ते, तेषु विरलजनेषु अथ एकः जनः संस्कृतस्य वर्णनातीत-काठिन्यस्य भीषणतायाः प्रदर्शनाय दुस्साहसं करोति। देशहिताय भाषा-हिताय च इदं कार्यं आवश्यकं जातं अस्ति।

अतएव विदुषां भर्त्सनभयं अपि परित्यज्य कर्त्तव्यपालनं क्रियते। इदानीं इदं न क्रियेत चेत् तदा संस्कृतस्य लोपः भवितुं अर्हति, तेन सह अस्माकं सर्वसाहित्यस्य, अध्यात्मविद्यायाः वेदज्ञानस्य ब्रह्मज्ञानस्य लोपः अपि। अनेन विश्वकल्याणस्य एकमात्रावलम्बः ईश्वरप्राप्तेः एकमात्रमार्गः अवरुद्धः लुप्तः वा स्यात्। अतएव इदं निवेदनं आवश्यकं सञ्जातम्। सर्वे विद्वांसः विचारन्तु ये लोक-

हितं चिन्तयन्ति, ये ऋषि-मुनि-परमात्मप्रदत्तज्ञान-विज्ञानं रक्षितुं इच्छन्ति। यदि मानवाः विशेषतया भारतीयाः स्वकर्त्तव्य-पालनं न करिष्यन्ति, तदा काचित् देवता, युक्तजनः, युक्तयोगी वा ईश्वरप्रेरणया लोके अवतरिष्यति, येषां प्रायः ईदृशी प्रतीक्षा विद्यते।

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय सम्भवामि युगेयुगे ॥
(गीता. अ. ४, श्लो. ७८)

इदं सदा एव भवति येन ईश्वरज्ञानस्य निर्भ्रान्तवेदज्ञानस्य ऋषि-मुनि-प्रदत्तज्ञानस्य वा लोपः न स्यात्। यदि अस्य ज्ञान-विज्ञानस्य लोपः स्यात् तदा लोकान्तः सृष्टयन्तः वा भवेत्।

परं मनुष्याणां अपि किञ्चित् कर्तव्य अस्ति, यत्ते तस्य सरली-करणे कार्य्यं कुर्य्युः, येन अस्माकं पूर्वपुरुषाणां ज्ञानविज्ञानं लुप्त न स्यात्। यस्य सम्बन्धे ईदृशं कथ्यते।

नासतो विद्यते भावो नाभावो विद्यते सतः।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥
अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्।
विनाशमव्ययस्यास्य न कश्चित् कर्त्तुमर्हति ॥
अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः।
अनाशिनोऽप्रमेयस्य तस्माद्युद्धयस्व भारत ॥
(गीता. अ. २, श्लो. १६-१८)

'अन्तवन्तः इमे देहाः' 'नित्यस्य शरीरिणः,' अनएव मिथ्या गर्व आलस्यं वा विहाय हे भारतीयाः! सत्यं कुरुत। असत्यं

लोके न जयति। सत्यं एव विजयते। संस्कृतस्य द्वार कस्मैचित् पुरुषाय अवरुद्धं न स्यात्। संस्कृत सरल स्यात् येन भूयः भारतस्य जनभाषा, राष्ट्रभाषा तथा विश्वस्य अन्ताराष्ट्रिय भाषा स्यान् पूर्ववत्।

इद कथितं अस्माभि यत् वर्त्तमानेतिहासस्य कथितमध्यकाले अर्थान् महाभारतकालानन्तर विशेषतया बौद्धकालानन्तरं भारतस्य पतनं अभवत्। देशस्य पतन तदा एव भवति यदा तस्य निवासिन क्षुद्रा वास्तविकज्ञानविज्ञानहीनाः जायन्ते। ईदृशा भूत्वा ते अनर्थकार्य्येषु प्रवृत्ता भवन्ति अजानन् अपि बालकवत्। प्राय मिथ्यागर्वं क्रियते तैः। अनेन अस्माकं लौकिकसंस्कृतं कठिनातिकठिनं सञ्जात शनै शनै। अद्य एतावत् काठिन्य अभवत् यत् तस्य लोप अपि भवितुं अर्हति। प्राय, सर्वे कथयन्ति यत् 'संस्कृतं सरल भवतु' परं मार्गप्रदर्शन केन अपि न क्रियते। अहं ईश्वर अवलम्ब्य किञ्चित् निवेदयामि। यदि अस्माकं निवेदन किञ्चित् अपि तथ्यपूर्ण स्यात् तत् ग्राह्यं बुधै, अन्यथा अस्माकं निवेदन अस्मत्कृते तिष्ठतु।

(२) इद सर्वं भूयः भूय विचार्य्य समालोच्य वा अस्माक निश्चितं मत जात अस्ति यत् लौकिकसंस्कृते केवल चतुर्लकारा स्यु अर्थात् लट् (वर्त्तमाने), लृट (भाविष्यदर्थे), लङ् (भूतार्थे) तथा लिङ् (विध्यादौ, हेतुहेतुमद्भावे च) लेट् लकार विहाय यः वेदे प्रयुङ्क्ते। इद अपि अस्माकं निश्चितं मतं अस्ति यत् लोके द्विवचनस्य आवश्यकता न अस्ति। अतएव क्रियायां सज्ञाया च द्विवचन न तिष्ठतु।

## चतुर्लकाराणां कः लाभः?

पूर्वं इद निवेदितं अस्माभि यत् अद्यतन-अनद्यतन भेदं भवे

लम्ब्य वर्त्तमान-भूत-भविष्यत्कालविभाजनस्य आवश्यकता नास्ति। विश्वस्य कस्याञ्चित् अपि भाषायां अयं भेदः न विद्यते। कालस्वरूपं अपि निर्णीतं अस्माभिः। कालः स्वरूपतः अनवरतं वहति एव। वस्तुतः कालविभागः भवितुं न अर्हति। वस्तुतः व्याकरणे कालविभागः एका काल्पनिकक्रिया या व्यवहार-सौविध्याय विद्वद्भिः क्रियते मन्यते वा। यदि कालविभागः अद्यतन-अनद्यतनभेदं अवलम्ब्य क्रियेत चेत् तदा क्षणक्षणभेदं अवधार्य कथं न क्रियेत। ईदृशे कालविभाजने अयं दोषः आगच्छति। वस्तुतः व्यावहारिकदृष्ट्या कालविभाजनं करणीयं यथा अन्यासु भाषासु क्रियते। निर्दोषं सम्पूर्णं वस्तु तु केवलं ब्रह्म एव। लोके इदं सर्वं सम्भवं नास्ति। अतएव व्यावहारिकदृष्ट्या यत्किञ्चित्करिष्यते तत् एव साधु भवितुमर्हति। व्यावहारिकदृष्ट्या भाषासरलीकरणाय च केवलं चतुर्लकाराणां आवश्यकता प्रतीयते। इदं भूयः अपि स्पष्टीक्रियते अस्माभिः यत् कालविभागः एका मानसीक्रिया या मनुष्याणां मस्तिष्के वर्त्तते। वर्त्तमानकालः तत् एव कथ्यते यस्मिन् काले कश्चित् व्यापारः चलति। यदि स व्यापारः पूर्वकाले समाप्तः तदा सः पूर्वकालः भूतकालः अर्थात् गतकालः कथ्यते। एवमेव यदि कश्चित् व्यापारः आगामिनि काले भविष्यति तदा सः कालः भविष्यत्कालः कथ्यते। इदं सर्वं मानसीक्रिया एव। अतएव कालमर्म ज्ञात्वा व्यवहार-सौविध्याय वर्तमान-भूत-भविष्यत्कालेषु त्रिलकाराः अर्थात् लट्-लङ्-लिट् प्रयोक्तव्याः। लोके अनेन पूर्णतया कार्य्यं चलितुं अर्हति। विध्यादिषु एवमेव हेतुहेतुमद्भावे लिङ् लकारस्य प्रयोगः स्यात् यथा महाभारतादि-प्राचीन ग्रन्थेषु अवलोक्यते।

## द्विवचनस्य निस्सारणे कः लाभः ?

पूर्वं इदं अपि निवेदितं अस्माभिः सङ्केतमात्रेण यत् द्विवचनस्य लौकिकसंस्कृते आवश्यकता नास्ति। वस्तुतः एकं अनेकं वा भेदं अवलम्ब्य वचनविभागः कार्य्यः यथा संसारस्य अन्यासु सर्वासु भाषासु क्रियते जर्मनभाषां विहाय। जर्मनभाषायां तु द्विवचनं विद्यते। प्राचीनकालतः एव जर्मनदेशे (शर्मणदेशे) संस्कृतस्य महीयान् प्रचारः वर्त्तते। द्वितीयमहायुद्धस्य पूर्वं तु प्रायः सर्वेषु जर्मनविश्वविद्यालयेषु संस्कृताध्ययनं अनिवार्य्यं अतिष्ठत्। पैरिसविश्वविद्यालयस्य संस्कृतप्रधानाध्यापकः श्री लुई रेनु महोदयः नागपुरे कथितवान् यत् संस्कृतसाहित्यविषये जर्मनदेशे महत् अन्वेषणं अभवत्। इदं प्रतीयते यत् संस्कृतभाषां अनुकृत्य द्विवचनं गृहीतं जर्मनभाषायाम्। तत् भवतु, परं वस्तुतः द्विवचनस्य आवश्यकता न अस्ति।

वेदे अपि द्विवचनं भवतु, परं लोके आवश्यकं अस्ति न वा इदं विचार्य्यते। संस्कृतसाहित्ये 'वेदः' 'लोकः' इति प्राचीनतमः विभागः। 'वेदः' अपौरुषेयः, लोकः पौरुषेयः, अतएव 'लोके' अस्माकं अधिकारः विद्यते। 'लोके' यत् संशोधनं लोकहिताय आवश्यकं तत् एव अवश्यमेव करणीयम्। वैदिकसाहित्ये तु सन्धिः विद्वद्भिः अनन्तरं कृतः, अतएव तस्मिन् विषये आवश्यकः सुधारः भवितुं अर्हति, येन वैदिकशब्दानां वास्तविकस्वरूपः उच्चारणं वा निश्चितं स्यात्। तत् इदं कथितं अस्माभिः यत् वेदमन्त्रेषु अद्य शक्तिः न विद्यते। मन्त्रशक्तिः मन्त्रार्थज्ञानात् उत्पन्ना भवति यथा—

( १ ) तस्य वाचकः प्रणवः,

( २ ) तज्जपस्तदर्थभावनम्,

( ३ ) ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च ।

( पा. यो. द. समाधिपादः २७-२९ सूत्राणि )

वैदिक साहित्ये अपि 'वाक्येषु' ( गद्यपद्ये वा ) सन्धि-कारणात् शब्दोच्चारणं अर्थज्ञानं च प्रायः असम्भवं सञ्जातम् । अतएव अद्य प्रायः वेदज्ञाः न प्राप्यन्ते । ये वेदज्ञाः कथ्यन्ते ते प्रायः स्वरसहितं वेदगानं पठनं वा कर्तुं शक्नुवन्ति । ते प्रायः शुद्धशब्दोच्चारणे अर्थज्ञाने वा असमर्थाः । वाक्येषु सन्धिकारणात् शुद्धोच्चारणं सर्वथा असम्भवम् । अनेन शब्दानां सम्यक् ज्ञानं भवितुं न अर्हति, तदा का कथा तेषां अर्थानाम् । अर्थज्ञानाभावात् मन्त्रशक्तिः लुप्ता अभवत् । वैदिकसाहित्ये तु केवलं वाक्येषु अ-सन्धिकारणमात्रं एव अस्माकं कर्त्तव्यम् । अनेन सर्वं प्राप्तं भवि-ष्यति पूर्ववत् ।

'वेदे' ते सर्वे लकाराः तिष्ठन्तु ये तत्र विद्यन्ते । वैदिक-व्याकरणं शब्दकोषः वा पृथक् विद्यते । अद्य वैदिक-व्याकरणं शब्दकोषः वा पूर्णः न अस्ति । इदं सम्भवं अस्ति यत् प्राचीन-काले सर्वं पूर्णं आसीत् , परं अद्य इयं स्थितिः न अस्ति । समय-प्रभावः प्रबलः । बहुवैदिकसाहित्यं नष्टम् । अतएव भूयः प्रयत्नः कार्य्यः । इदं ऐतिहासिकं तथ्यं यत् बहुसाहित्यं बौद्धकाले मुस्लिमकाले च नष्टम्, अथवा अस्माकं आलस्यात्, अज्ञानात्, प्रमादात् वा नष्टम् । दोषः तु अस्माकं एव । 'वेदे' द्विवचनं अपि तिष्ठतु । तस्य विरोधः न अस्ति । परं यत् वेदे आवश्यकं अनावश्यकं वा तत् लोके भवितुं न अर्हति, यथा लेट् लकारः वेदे प्रयुज्यते लोके न भवति, एवमेव अन्य विषयेषु अपि । वैदिक-शब्दानां सृष्टिः अपि भिन्ना । तेषां विषये प्रायः कथ्यते—

"बहुलं छन्दसि" १।४।३९, ७३,७६ इत्यादि।

वैदिकभाषातः विश्वस्य सर्वाः भाषाः निस्सृताः, अतएव सम्पूर्ण-वैदिकभाषाज्ञानं आवश्यकम्। अनेन कारणेन अपि वैदिकव्याकरणं शब्दकोषः वा यथा पूर्णः स्यात् तथा करणीयः। द्वितीयं भगवन्तः वेदाः भारतीयानां सर्वोपरि धर्मग्रन्थाः, येषां पठनपाठनं अनिवार्य्यम्। स्थाने स्थाने कथितं यत्—

"वेदः अखिलः धर्ममूलम् ... ... "

"श्रुतिप्रामाण्यतः विद्वान् स्वधर्मे निविशेत वै"

(मनु अ. २।६, ८) इत्यादि।

अतएव धर्मानुसारं वयं धर्मज्ञाः धार्मिकाः च न भवितुं अर्हामः, यावत् भगवतः वेदान् अर्थात् तेषां अर्थान् न जानीमः। यदि अद्य कोटि-कोटि-भारतीयेषु द्वित्रि वेदज्ञा स्युः तदा तेन किं भवति। ईदृश्यां अवस्थायां भारतपतनं अवश्यम्भावि। भारतीयानां भारतधर्मः वेदधर्म एव, भारतीया संस्कृतिः वेदिक-संस्कृति एव। भारतधर्मस्य भारतीयसंस्कृतेः च सम्यक् ज्ञानं भगवतः वेदान् विहाय न भवितुं अर्हति। यस्मिन् स्वर्णदिने भारतीयाः इदं तथ्यं ज्ञास्यन्ति, तस्मिन् दिने एव भारतोत्थानं भविष्यति।

## द्वे व्याकरणे द्वौ कोषौ च।

वस्तुतः द्वे व्याकरणे आवश्यके एवमेव द्वौ कोषौ आवश्यकौ पृथक् पृथक् वैदिकभाषाविषये लौकिकभाषाविषये च। अद्य वैदिक-व्याकरणं कोषः च सम्पूर्णं न प्राप्यते। तस्मिन् सम्बन्धे महतः अन्वेषणस्य आवश्यकता अनुभूयते। यावत् इदं न भवति तावत् भगवतां वेदानां पठनपाठनं न भवितुं अर्हति। इदं सम्भव

अस्ति यत् शनैः शनैः वेदज्ञानस्य सर्वथा लोपः स्यात्। महाश्चर्यस्य इयं वार्त्ता यत् द्वितीयमहायुद्धस्य पूर्वं जर्मनदेशे सायणाचार्यस्य ऋग्वेदभाष्यं मिलतिस्म ३७५) रूप्यकेषु। भारते वर्षे तत् अपि प्राप्तं न आसीत्, एवमेव अन्येषां वैदिकग्रन्थानां दशा आसीत्।

अद्य तु कश्चित् उद्योगः पुण्यपत्तन नगरे चलति तथा ततः ऋग्वेदभाष्यं प्राप्तुं शक्यते, परं मूल्यं एतावत् विद्यते यत् विरलजनाः दातुं शक्नुवन्ति। एतेभ्यः सर्वेभ्यः कारणेभ्यः वैदिकसाहित्यस्य पठनपाठनं दुर्लभं सञ्जातम्। वैदिकभाषा अपि सन्ध्यादिकारणात् कठिनतमा अभवत्। तदा मनुष्याणां विशेषतया भारतीयानां वेदे अरुचिः उत्पन्ना। वैदिकशब्दकोषः प्रायः अप्राप्तवस्तु।

अनेन वेदमन्त्राणां अर्थः अपि न लगति। वस्तुतः वेदमन्त्रार्थज्ञाने वैदिकभाषाज्ञानेन सह तपः योगः वा आवश्यकः। योगावस्थायां वेदमन्त्राणां सम्यक् अर्थज्ञानं भवितुं अर्हति भवति एव। केवलं शब्दज्ञानेन सम्पूर्णार्थज्ञानं न भवति। दैवी सम्पत्तिः इयं अतएव ईश्वरसाहाय्यं अपेक्षते। सम्पूर्णवेदार्थज्ञाने योगः आवश्यकः, परं प्रथमं तु भाषाज्ञानं नितान्तं आवश्यकम्। भाषाज्ञानाय सम्पूर्णवैदिकव्याकरणं कोषः च आवश्यकः।

लौकिकसंस्कृतविषये अपि नवीनं व्याकरणं सम्पूर्णकोषः च आवश्यकः। अद्य लौकिकसंस्कृतव्याकरणे संशोधनानि आवश्यकानि। अतएव सर्वे विद्वांसः एकीभूय अस्मिन् विषये विचारं कुर्वन्तु। यत् उचितं स्यात् तत् एव पूर्णतया विचार्य करणीयम्। प्राचीनव्याकरणपुस्तकानि विद्वद्भिः निर्मितानि तस्य कालस्य आवश्यकतां अनुभूय। अद्य आधुनिक-विद्वांसः वर्तमानकालस्य आवश्यकतां अनुभूय व्याकरणे आवश्यकं

संशोधनं कुर्वन्तु। लौकिकसंस्कृतभवनस्य मूलाधाराः मूलस्त-म्भाः स्वरूपे तिष्ठन्तु, परं यत्रतत्र भग्नांशाः ते दूरं करणीयाः, भवनस्य दृढीकरणाय नवीनाः निर्माणानि स्थापनीया च। भाषाधारेषु आमूलचूलपरिवर्त्तनस्य आवश्यकता नास्ति, परं येन प्रकारेण संस्कृतभाषाभवनं सुदृढं स्यात् तत्सर्वं करणीयम्। यथा गीतायां विद्यते—

> वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि।
> तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही॥
> (गीता २।२२)

अतएव संस्कृतराजभवनस्य जीर्णांशाः स्थलानि वा शोकमोह-रागद्वेषादिरहितेन आप्तेन दूरीकरणीयानि। केवलं अनेन मार्गेण एव अर्थसिद्धिः भवितुं अर्हति न अन्यथा। जीर्णांशदूरीकरणे कः शोकः क मोहः? जीर्णवस्त्रेषु जीर्णांशेषु मोहः त्याज्यः। यथा मूर्खजनाः जीर्णवस्त्रेषु शरीरेषु वा मोहं कुर्वन्ति, तथा पण्डितैः संस्कृतविद्वद्भिः भाषा-शुभचिन्तकैः न करणीयम्। संस्कृतस्य जीर्णशरीरेण अद्य किं भवितुं अर्हति? यथा जीर्णशरीरकारणात् आत्मा देही वा निर्बलः पुरुषार्थहीनः मरणासन्नः प्रतीयते, तथा अद्य वेदज्ञानविज्ञानरूपि-प्रधानतत्त्वं आत्मतत्त्वं वा यत् संस्कृत-साहित्यरूपि-शरीरे निवसति निरर्थकं कान्तिहीनं प्रतीयते। तथापि कियन्तः पण्डिताः संस्कृतरूपि-जीर्णशरीरे मोहं कुर्वन्ति, संस्कृतस्य मृतप्रायशरीरे नवीनजीवनं स्फूर्तिं वा दातुं नेच्छन्ति, तदुपरि च कामयन्ते यत् संस्कृतं भूयः राष्ट्रभाषा भवेत्।

इदं कथितं अस्माभिः यत् प्रचलितरूपे संस्कृतं कदापि जन-भाषा राष्ट्रभाषा च भवितुं न अर्हति पूर्ववत्। संशोधनानि आवश्यकानि जातानि सन्ति, यानि संस्कृतस्य मृतप्रायशरीरे

नवीनजीवनं प्रदास्यन्ति । अत्र एकं उदाहरणमपि पुनः प्रदीयते प्रचलितसंस्कृतस्य, येन अस्माकं निवेदनं सुस्पष्टं स्यात्। अहं वारं वारं निवेदयामि यत् प्रचलितसंस्कृतस्य शुद्धोच्चारणं अवाध्यपठनपाठनं अपि भवितुं नार्हति । कदापि कदापि अर्थस्य अनर्थः अपि भवति । प्रायः वाक्येषु सन्धिकारणात् अर्थः स्पष्टः न जायते अर्थात् वाक्यार्थहानिः सञ्जायते। वाक्यार्थज्ञानं न भवति, अतएव ज्ञानहानिः सञ्जायते। भाषा लोक-परलोकज्ञानाय भवति । अतएव का भाषा नाम तस्याः यस्याः काठिन्यकारणात् ज्ञानवृद्धिः पूर्वज्ञानरक्षणं वा न सम्भवति । प्रचलितरूपे संस्कृतस्य ह्रासः अवश्यम्भावी । अनेन सह वेदज्ञानस्य एवमेव अस्माकं पूर्वपुरुषाणां ऋषिमुनीनां ज्ञानस्य लोपः अवश्यम्भावी। अनेन लोकहानिः ।

## प्रचलितसंस्कृतस्य उदाहरणम्।

( एकं उद्धरणम् २८-११-४८ तारिकायाः "संस्कृतम्" पत्रस्य दीयते । इदं उद्धरणं "संपादकीयलेखः" अस्ति )

## भारतादुत्तरमपेक्षते

गतसप्ताहे समाचारद्वयमीदृशं प्रकाशितं येन समस्तस्य संसारस्य, भारतस्य च वार्त्तां न जानामि परमहमवश्यमभूवञ्चकितचकितः । प्रथमः समाचारस्तु काबुलविश्वविद्यालयस्य साहित्यपाठक्रमे संस्कृतस्यानिवार्यमध्ययनम्, द्वितीयश्च चिदम्बरस्थाण्णामलै-विश्वविद्यालये पैरिसविश्वविद्यालय-संस्कृताध्यापक डा० लुई रेणुकृतं संस्कृतस्य राष्ट्रभाषात्वसमर्थनम् । विदेशीयैः कृतोऽयमत्युत्कृष्टः संस्कृतभाषाया आदरो भारतादुत्तरमपेक्षते यत् तस्य कीदृशी विदेशीयभाषासु समादर-बुद्धिरिति विदेशीयेषु, विदेशीयसंस्कृतिषु संस्कृते च ?

लखनऊ नगरे आचार्यनरेन्द्रदेवेनोक्तमासीद् यद्भारतस्य संस्कृतक्षेत्रेशियाया भाषा अध्ययनीया यतस्तासु प्राचीनाः सांस्कृतग्रन्था अनूदिताः प्राप्यन्ते। गतवर्षे काशी-गवर्नमेण्ट-संस्कृत कालिजस्य समावर्त्तनोत्सवे महामहोपाध्याय श्री विधुशेखर भट्टाचार्य्येणोक्तमासीद् यच्चीनभोटपालीप्राकृतभाषाणामध्ययनमन्तरा संस्कृताध्ययनमेव न पूर्तिमेति। गतसप्ताहे काश्यां श्री सम्पूर्णानन्देनाप्यभिहितं यद्धिन्देशियायाः पुस्तकालयेषु संस्कृतग्रन्था विद्यन्ते तेषामवलोकनमावश्यकम्। मेरठे श्री गोविन्ददासः सिंहलदयामभाषयोः संस्कृतप्राचुर्य्यं साधयाञ्चकार। भारतस्थितेन रूसराजदूतेनापि रूसे संस्कृताध्ययनोत्साहो वर्णितः। अमेरिकाया अपि काश्चन संस्थाः संस्कृते प्रचारयन्ति। एभिः सर्वैस्तात्कालिकैः प्रमाणैर्ज्ञायते यत्संस्कृतभाषायाः समादरः सर्वैः क्रियते, तर्हि भारतीया किमर्थं साधारणभाषायै हिन्द्यै कालं यापयन्तोऽन्ताराष्ट्रियसम्पर्कस्थापनाद्विरता भवन्ति? बृहत्तरभारतस्य निर्माणं किं हिन्द्याधारेण सम्भाव्यते? तस्मिन् दिने सुस्पष्टमुक्तमाचार्यनरेन्द्रदेवेन यदियमतिलज्जाया वार्ता यदेतद्भारवहने हिन्दी सर्वथा असमर्था। अस्यामवस्थायां भारते कूपमण्डूकीकर्तुमुद्यतानां हिन्दीयतां सुहृदां यो विरोध आदिष्टो विचारवद्भ्यो भारतीयेभ्यः स किं डा० लूईरेणोरपराधत्वेन गणयिष्यते?

हिन्दीभाषां भारते परं न यदा केचन पृच्छन्ति तदैतया विदेशानां सम्पर्कस्थापनं तु दूरदूरम्। यद्बङ्गकलामाम-महाराष्ट्र-गुर्जर-दक्षिण-भारतेषु का हिन्दी प्रर्दातुमुद्यतः? उत्तरभारतेऽपि किं सर्व एव सन्ति हिन्दीराष्ट्रभाषात्वपक्षपातिनः? किमुत्तरभारतेऽपि हिन्दुस्तान्यंग्रेजीसंस्कृतराष्ट्रभाषात्वपक्षपातिनो न सन्ति?

वङ्गाद्युक्तेषु सर्वेषु प्रान्तेषु संस्कृतराष्ट्रभाषात्वपक्षपातिनां प्राचुर्यम्। अत्रापवादा न गण्यन्ते। अस्यामवस्थायां हिन्द्या राष्ट्रभाषात्व-प्रख्यापनं केवलमुपहासास्पदम्। विचार्य दृश्यते तर्हि ज्ञायते यद्धिन्दीसंस्कृतोर्दूअंग्रेजीत्यादि विविधभाषाणामेकोद्भुतः संयोगोऽयं संस्कृतसूत्रेणाबद्धो वर्त्तते। इत्थं हिन्दी वङ्गादिभाषावत् प्राधान्यं न विभर्त्ति प्रतिक्षणं परिवर्त्तनशीला। एतादृश्या भाषया राष्ट्रप्रधानभाषात्वमाग्रहाविष्टैरेव साधयिष्यते।

अस्मत्कथनस्यायमाशयो यद् भारतीयाः सर्वप्रथमं संस्कृताय महत्पदमर्पयेयुः। ततो भारतसम्बद्धविदेशीयभाषाः पठेयुः। तदनन्तरं पूर्वत एव संस्कृतप्रभावितेषु देशेषु भारतीयाः संस्कृत-मुन्नमय्य, जगदद्वितीयभारतीयाध्यात्मज्ञानेन तान् वशीकृत्य, स्वसंस्कृतौ समानीय शास्त्रविधिना, स्वाकारान् विरच्य विश्व-शान्तिं स्थापयेयुः। सर्वथा निश्चितमेतद्विश्वशान्तिः भारतीयादर्श-स्थापनमन्तरा न सम्भवा। अस्माकं राष्ट्रपतिर्विश्वशान्तिमिच्छति तदर्थं भारतीयैः संस्कृतराष्ट्रभाषात्वे विलम्बो न विधेयः संस्कृतं शान्तिमूलम्।

भारते केचन जना उर्दु-फारस्यरवीशब्दानां विरोधं कृत्वा साम्प्रदायिकतां प्रचारयन्ति, प्रसारयन्ति यदाऽस्माकमसाम्प्रदा-यिकः सरकारः साम्प्रदायिकताप्रचारकाणां न केवलं विरोधमेव करोति, प्रत्युत तान् दण्डयत्यपि। यस्य साम्प्रदायिकतावादस्य जनतायाः सरकारः स्थितिं न कामयते तमेव सरकाराधिष्ठात्री जनतैव काचित् सद्दीभूय प्रसह्य यदि संस्थापयेत् तर्हि महाखेदएव। विश्वशान्तिस्थापका भारतीयाः समस्तजगदात्मसदृशं मन्वाना न कस्यचिद्विदेशीयस्य धर्मस्य, सम्प्रदायस्य, जनस्याहितमसत्कारं

या चिन्तयन्ति न कस्याश्चिद् विदेशीयायाः संस्कृतेर्वा भाषायाः।

भारतीयानां विचारे तु तत्तद्देशवासिनां धर्मसम्प्रदायसंस्कृति-भाषा यथा तेषां दृष्टौ सम्मानमर्हन्ति तथैवास्माकमपि। भारतीयानामयमुदारः सिद्धान्तः—'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः' 'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः॥' 'सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः। सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखभाग्भवेत्' इति। भारतीयास्तु पूर्वत एवोपदिशन्ति यत्सर्वे स्वधर्मकर्म-सम्प्रदायसंस्कृतिभाषासु सुदृढाः स्युः। ते न कस्यचिद्धर्मादीनां ग्रहणमिच्छन्ति न परेषां स्वस्मिन् समावेशनम्। इत्थमेकसंस्कृतिप्रचारकारका अपि विदेशीय-शब्द-बहिष्कारका इव साम्प्रदायिकताप्रचारका एव वक्ष्यन्ते। अस्माकं पुरातनमेतन्मतं यत्कस्याश्चिदपि भाषाया रूढिगताः संज्ञाशब्दास्तद्रूप एव ग्राह्याः। एतेषां संस्कृतिकरणमनुचितम्।

एतस्मात्कारणादेव भारतीय-विधानानुष्ठितानां शब्दानां यत् संस्कृतिकरणमकारि कैश्चित्तन्नोचितमस्माभिर्मतम्। परभाषा शब्दग्रहणं तु साधारणी वार्ता अहं तु भारते सर्वासां विदेशीय-भाषाणामध्ययनमध्यापनं कामये। अरबीजन्यभाषास्तु एक-प्रकारेण तथैव सांस्कृता यथा हिन्दीप्रभृतयः। गतदिने एवोक्त-मफगानराजदूतेन पश्तोभाषा संस्कृतादुत्पन्ना प्रमाणितेति। अस्यामनस्यायामुर्दुसंश्लिष्टाया हिन्दुस्तान्या विरोधेऽनौचित्यमव-लोकयामो वयं यत उर्दू पश्तो-अरबीभाषाप्रभाविता ततो निरस्ता च।

परभाषा संस्कृत्यादिग्रहणे केचन भीता भारतीयाः स्वभाषा-संस्कृतिवैकृत्यमनुचिन्तयन्ति। एतादृशं चिन्तनं भयानकमज्ञानं तेषां संस्कृतशक्तौ प्रकटयति। ते न विचारयन्ति यत् संस्कृत-भाषा जगत्यद्वितीयशक्तिमती। यावत् सा भारते विद्यते तावत्समस्तसंसारस्यापि भाषाः कदाचिदपि न तामुच्छेत्तुं शक्ता न तदाश्रितां भारतीयां संस्कृतिम्। तास्तु सर्वा एव संस्कृतं सम्मुखीभूय दासीभूता भविष्यन्ति। भारतीयैरंग्रेज-राज्ये संस्कृतं परित्यक्तमतएवात्राचिरस्थायिनी विदेशीयता दृश्यते। भारतीयराज्येऽपि ये जनाः संस्कृतस्य राष्ट्रप्रधानभाषा-त्वमस्वीकृत्य हिन्द्याः प्रचारयन्ति नेऽनुचितमाचरन्ति। भारते सर्वविधा भीतिः संस्कृतत्यागेनैव सम्भवा। सत्यमुच्यते माननीय श्री अणे महोदयादिभिः संस्कृतं यदि न स्थास्यति भारतीया संस्कृतिश्चापि न स्थास्यतीति।

केचन संस्कृतं ब्राह्मणानां भाषां संसाध्य, तामेकदेशीयां केवलं ज्ञानभाषां प्रचार्य, तस्य विश्वभाषात्वमुच्छेद्य अनुचितमर्चं कुर्वाणा खिलीकरणमाकाङ्क्षमाणा व्यवहारानर्हत्वमुद्घोष्य राष्ट्रभाषात्वं खण्डयन्ति। ते न जानन्ति यत् संस्कृतसेवकेषु आचाण्डालमाशूद्रं द्विजातयोऽपि सन्ति, जैनाः, बौद्धाः, क्रिश्चनाः, मुसल्मानास्तथान्य-देशीया अपि। ब्रह्मवज्जगद्व्यापिन्या अस्या जगन्मातुरयमनादरः सर्वथा सोढुमयोग्यः एतस्मात्कारणादस्माभिर्भारतीयैः संस्कृतस्यैव राष्ट्रभाषात्वमङ्गीकृत्य प्रकटीकरणीयं यद् यस्या भाषाया विदेशीयाः सत्कारं कुर्वन्ति तस्या भारतं पूर्वत एवार्चनं करोति, प्रधानपदे च संस्थापयति। इदमेवास्माकं विदेशीयसंस्कृतसमादरणस्य समुचितमुत्तरं भवितुमर्हति यदपेक्षतेऽद्य संसारः।

व्यागरा— पं. कालीप्रसादशास्त्रिमहोदयाः 'संस्कृतम्' पत्रस्य माननीय सम्पादकाः भारतस्य सुप्रसिद्धमहापण्डितेषु सन्ति,

ये नक्तन्दिवं संस्कृतस्य राष्ट्रभाषात्वाय यतन्ते। संस्कृतस्य प्रचारणे तेषां महोदयानां महान् उद्योगः वर्त्तते। तेषां द्वे प्रतिज्ञे विधेते—

( १ ) अस्यां एव शताब्द्यां संस्कृतं राष्ट्रभाषा भवेत् । अयं एव संस्कृतस्य उद्देशः ।

( २ ) यावत्-भारतवर्षं स्यात् यावत् विन्ध्याहिमाचलौ ।
यावत् गङ्गा च गोदा च तावत् एवाहि संस्कृतम् ॥

प्रथमं तु अस्माकं इदं निवेदनं साधारणतया भारतस्य सर्वेषां विदुषां कृते विधते, परं अहं विशेषतया सम्पादकमहोदयस्य 'संस्कृतभाण'स्य सेवायां निवेदयामि यत्कथं तैः एतेषां उपायानां अवलम्बनं न क्रियते येन 'संस्कृतम्' राष्ट्रभाषात्वाय योग्यं स्यात्। किं इदं न विचार्यते तैः यत्संस्कृतं प्रचलितरूपे राष्ट्रभाषा भवितुं अर्हति न वा। कानि कानि संशोधनानि आवश्यकानि सन्ति संस्कृतभाषायां येन सा सरला सुबोधा च स्यात्। ते मया वारंवारं निवेदिता यत् प्रचलितसंस्कृते संशोधनानि आवश्यकानि सन्ति येन संस्कृते सारल्यं सुबोधत्वं च आगच्छेत्। तेषां संक्षेपेण उत्तरं इदम्,

"......सरलसंस्कृतस्य अहं अवश्य पक्षपाती ..भाषणसमये सन्धौ नियमराहित्यं स्वत एव जायते परं न तल्लेखनवस्तु। अस्माकं समस्तभारतस्य महाविदुषां पत्रम्। तत्र नियमरहितं प्रकाशनं असम्भवम्। "वाक्ये स सन्धि विवक्षां अपेक्षते" इत्येव मन्ये।"

यदि इद सत्यं अस्ति यत् "वाक्येषु सन्धि विवक्षां अपेक्षते" तदा वाक्ये क्रियेत न वा। वाक्येषु सन्धिः न क्रियेत चेत् तदा सम्पादकमहोदयस्य मतानुसारं एव वाक्यं संस्कृतव्याकरण-

सम्मतं विद्वद्भिः स्वीकृतं भविष्यति । सर्वैः विद्वद्भिः मन्यते यत् " वाक्येषु सन्धिः विवक्षां अपेक्षते " । इयं न्यूनातिन्यूनं सर्वमान्या स्थितिः । वाक्यानि भाषणे अपि भवन्ति एवमेव लेखने अपि । तदा कथं कथ्यते सम्पादकमहोदयैः यत् "......न तल्लेखनवस्तु " । कुत्र अपि इदं न दत्तं विद्यते । अतएव सम्पादकमहोदयैः स्वमतं स्वमतेन खण्डितं क्रियते । यदि वाक्येषु सन्धिकरणं इच्छाधीनं तदा क्रियते न वा । तत्र का हानिः । वाक्यपदेषु सन्धिकरणे कः लाभः ? अहं कमपि लाभं न पश्यामि ।

द्वितीयं इदं कथ्यते सम्पादकमहोदयैः यत् "अस्माकं समस्तभारतस्य महाविदुषां पत्रम्" । परं इदं सर्वैः महाविद्वद्भिः मन्यते यत् "वाक्येषु (लेखने भाषणे वा) सन्धिः वैकल्पिकः सर्वथा इच्छाधीनः " अतएव यदि ' संस्कृतम् ' पत्रे वाक्येषु सन्धिः न क्रियेत तदा नियमविरुद्धता न आगन्तुं शक्नोति । अयं केवलं भ्रमः एव । अहं जानामि यत् केचित् पण्डिताः एतादृशीं आपत्तिं उत्थापयन्ति परं तस्यां काचित् सत्यता नास्ति । संसारस्य अन्यासु सर्वासु भाषासु शब्दाः पदानि वा वाक्येषु पृथक् पृथक् विद्यन्ते । कस्याचित् अपि भाषायां पदानां मेलनं न क्रियते यथा संस्कृते क्रियते । लेखनभाषा कठिना सरला वा भवतु परं पदानां संहितीकरणं सर्वथा अनावश्यकम् । वाक्यपदेषु सन्धिकारणात् बाधा उत्पद्यते । क्षणेक्षणे शब्दानां रूपाणि भिन्नानि जायन्ते अस्यां अवस्थायां बालकाः किं पण्डिताः अपि शब्दनिर्णये असमर्थाः जायन्ते । संस्कृतव्याकरणानुसारं तु " असंहितावाक्ये " अयं नियमः, परं विद्वद्भिः " वाक्ये संहिता विवक्षां अपेक्षते " इतिसिद्धान्तः स्वीक्रियते । तदुपरि नियमरूपेण वाक्येषु सन्धिप्रयोगः क्रियते । कश्चित् अपि अद्य पण्डितः न मन्यते यः वाक्येषु ( लेखने भाषणे वा ) नियमरूपेण सन्धिप्रयोगं न कुर्यात् ।

अनेन प्रकारेण संस्कृते वर्णनातीतं काठिन्यं सञ्जातम्। अद्य संस्कृतभाषा केवलं पुस्तकभाषा सञ्जाता। अद्य कुत्रापि संस्कृतं व्यवहारभाषा न अवलोक्यते। व्यवहारभाषायां तु एतादृशं काठिन्यं न भवितुं अर्हति। कथितप्राचीनपरिपाटीं मन्यमानाः पण्डिताः संस्कृतस्य सर्ववर्गेषु सर्वसाधारणपुरुषेषु प्रचारं न कामयन्ते। ये संस्कृतविद्वत्सु प्रचारं कामयन्ते, ते लघुसंख्यायां विद्यन्ते, परं ते अपि संस्कृतस्य सरलीकरणे वास्तविकरूपेण अग्रेसराः न भवन्ति। कथितप्राचीनपण्डितानां भयात् दुरभ्यासात् दुराग्रहात् वा ते अपि वाक्येषु सर्वत्र सन्धिप्रयोगं कुर्वन्ति येन संस्कृते पूर्ववत् काठिन्यं तिष्ठति।

एकं अन्यत् अपि कारणं वाक्येषु सन्धिप्रयोगस्य भवितुं अर्हति। कदाचित् पण्डिताः बिभ्यति यत् यदि ते वाक्येषु सन्धिप्रयोगं न करिष्यन्ति तदा सन्धिनियमान् विसारिष्यन्ति। परं अयं अपि भ्रमः एव। यस्य सम्पादकीय लेखस्य अत्र उद्धरणं दीयते तत् कश्चिदपि पुरुषः (महापण्डितः किं न भवेत्) अबाधरूपेण पठितुं न शक्नोति। वाक्येषु सन्धिकरणस्य अयं महादोषः। अस्य दोषस्य दूरीकरणे संस्कृतज्ञानां संस्कृतभाषायाः च कल्याणम्। सम्पूर्णलेखस्य पठनात् संस्कृतज्ञाः अस्माकं निवेदनस्य सत्यतां अनुभविष्यन्ति।

तथापि अत्र द्वित्रोदाहरणानि लेखात् अत्र दीयन्ते येन अस्माकं निवेदनं स्पष्टतरं स्यात्। (१) सर्वप्रथमं लेखस्य शीर्षकं अवलोकनीयं पाठकैः, तत् विद्यते "भारताद्युत्तरमपेक्षते"। वस्तुतः अनेन शीर्षकेन भवितव्यम् "भारतात् उत्तरं अपेक्षते" येन पदानि स्वरूपे पृथक् पृथक् तिष्ठन्तु। कः संस्कृतज्ञः अन्धः अपि इदं शीर्षकं ज्ञातुं शक्नोति। "भारतात्" इदं पदं विद्यते परं वाक्यपदेषु सन्धिकरणे अस्मात् सूत्रात्—

" झलां जशोऽन्ते " ८।२।३९। (सू. सं. ८२)

" भारताद् " इति भवति। परं "भारताव" पदस्य ' भारतान्' अपि भवितुं अर्हति यदि उत्तरपदस्य म प्रथमवर्णः स्यात्।

" यरो नु नासिकेऽ नुनासिको वा " ८।४।४५ (सू. सं. ८३)

यथा "भारतान्नोत्तरं अपेक्षते"। अत्र भारतात् शब्दस्य भारतान् भवति। भारतान् शब्दस्य द्वौ अर्थौ भवतः द्वितीयायां अर्थात् कर्माणि। द्वितीयायां भारतान् शब्दस्य द्वौ अर्थौ भारतनिवासिनः भारतस्य अपत्यानि वा भवतः। अतएव पदेपु सन्धिकरणे पूर्णभ्रमः भवितुं अर्हति। अस्यां दशायां वाक्यपदेपु सन्धिकारणात् भ्रमः एव उत्पद्यते। लाभ तु कश्चित् अपि न भवति।

(२) " कृतोऽयमत्युत्कृष्टः संस्कृतभाषाया आदरो भारतादुत्तरमपेक्षते " एकं अन्यं उदाहरणं अत्र दीयते। वाक्येन अनेन प्रकारेण भवितव्यम्। " कृतः अयं अत्युत्कृष्टः संस्कृतभाषायाः आदरः भारतात् उत्तरं अपेक्षते "। वाक्यपदेपु सन्धिकरणे का आपत्तिः आपतति इति स्पष्टीक्रियते। प्रथमं " कृतः अयं अत्युत्कृष्टः " कृतोऽयमत्युत्कृष्टः " सञ्जातः। संस्कृतज्ञैः अस्य उच्चारणं कारिष्यते " कृतोऽयमत्युत्कृष्टः "। " कृतोय " शब्दः न अस्ति, न " मत्युत्कृष्टः "। अनेन प्रकारेण सर्वथा अशुद्धं उच्चारणं भविष्यति। पदानां शुद्धोच्चारणं नितान्तं आवश्यकम्।

यदि इदं अपि भवितुं न अर्हति संस्कृते, तदा का नाम भाषा संस्कृतम्। इदं पूर्वोदाहरणे स्पष्टं कृतं अस्माभिः यत् प्रथमं तु शब्दाः विरूपतां गृह्णन्ति वाक्येपु सन्धिकारणात्। द्वितीयं शुद्धोच्चारणं अपि न भवति शब्दानां पदानां वा। महादोषौ एतौ। कदापि बालकाः संस्कृतशब्दानां शुद्धरूपं ज्ञातुं न शक्नुवन्ति। इदं लेखनपरिपाटी महादोषपूर्णा सर्वथा त्याज्या। गतसहस्र द्विसहस्रवर्षेपु यदा संस्कृतस्य महान् ह्रासः सञ्जातः यदा बौद्ध-

कालप्रभावात् संस्कृतज्ञानां मूर्खत्वाद् वा संस्कृतं केवलं पण्डितानां भाषा अभवत् जनभाषा स्वपदं विहाय, यदा शासकैः संस्कृत-साहित्यं येन केन प्रकारेण नष्टीकृतं, यदा मुद्रणादि-सौविध्यं देशे न आसीत्, तदा यदि इयं महादोषपूर्णा अपि लेखनादि परिपाटी प्रचलिता संस्कृतसाहित्यस्य धर्मग्रन्थानां संरक्षणाय क्षन्तव्या, परं अद्य तस्य आवश्यकता न अस्ति।

. अहं जानामि यत् केचित् पण्डिताः संस्कृतस्य सर्वस्यां जनतायां पंक्तिभेदं विहाय प्रचारं न कामयन्ते, न ते तस्य विश्वप्रचारं कामयन्ते पूर्ववत्, परं ईदृशानां जनानां कथितपण्डितानां अतिलघ्वी संख्या विद्यते। अद्य संस्कृतोत्थानस्य भूयः समयः आगतः अस्ति ईश्वरेच्छया। अतएव उन्नतिः भविष्यति एव कश्चित् इच्छेत् न वा। 'संस्कृत-भाषाया आदरो' वस्तुतः 'संस्कृतभाषायाः आदरः' अस्ति। 'संस्कृत-भाषाया' पदं न अस्ति, न 'आदरो'। कथं बालक संस्कृत-पठनपाठनेच्छुक पदानां शुद्धरूपं ज्ञातुं शक्नोति। संस्कृतभाषायाः अयं महत्तमः दोषः यत् कश्चित् अपि श्रवणमात्रेण संस्कृतं शिक्षितुं न शक्नोति।

संसारस्य अन्याः सर्वाः भाषाः श्रवणमात्रेण कथनमात्रेण वा जनाः शिक्षितुं शक्नुवन्ति संस्कृतं विहाय। संस्कृत भाषाकाठिन्यस्य इदं एकं अकाट्यं प्रमाणम्। इदं सर्वं संस्कृतज्ञैः सावधानतया उदारतया देशकल्याणाय विचारणीयम्। संकुचितविचारैः किञ्चित् अपि भवितुं न अर्हति। लोके सर्वाणि वस्तूनि परिवर्तनशीलानि, अतएव वस्तुषु नवीनजीवनप्रदानाय प्राणदानाय वा जीर्णशरीरस्य परिवर्तनौषधं आवश्यकम्। समयः बलवान्। समयानुसारं अस्माभिः अपि करणीयम्। अद्य संस्कृतभवनं जीर्णं विद्यते, यस्य लोपः अवश्यम्भावी किञ्चित्कालानन्तरम्। यावत् समयः तिष्ठति

तावत् जीर्णोद्धारोपायः करणीयः। अद्य संस्कृतं मृतप्रायं इति कथ्यते, मृतं न स्यात् कदाचित् तत् एव करणीयम्। संस्कृतभविष्यं भवतां हस्ते विद्यते। संस्कृतस्य सर्वकालीनं रूपं अन्वेषणीयं, यत् तावत्पर्यन्तं तिष्ठेत्, यावत् लोके सूर्यः, चन्द्रः च तिष्ठति सम्पादकमहोदयस्य शब्देषु,

यावत् भारतवर्षं स्यात् यावत् विन्ध्यहिमाचलौ।
यावत् गङ्गा च गोदा च तावत् एव हि संस्कृतम्॥

एतस्य सुवर्णदिनस्य आनयनाय सम्पादकमहोदस्य लेखन-परिपाट्याः शैल्याः वा सूक्ष्मदृष्ट्या समालोचना क्रियते। स्थूल-दृष्ट्या तु काचित् अपि हानिः न प्रतीयते।

लेखस्य द्वितीयधारायां (पैरायाम्) विद्यते" लखनऊ नगरे आचार्यनरेन्द्रदेवेनोक्तमासीद् यद्भारतस्य संस्कृतैशियाया भाषा अध्ययनीया यतस्तासु प्राचीनाः सांस्कृता ग्रन्था अनूदिताः प्राप्यन्ते"। अत्र "भाषा, अध्ययनीया, सांस्कृता, ग्रन्था" शब्दाः बहुवचने विद्यन्ते येषां रूपाणि सन्ति "भाषाः, अध्यय-नीयाः, सांस्कृताः, ग्रन्थाः"। "भाषा. अध्ययनीया, सांस्कृता" एकवचने अपि भवितुं अर्हति, परं "ग्रन्था" कदापि नहि। "ग्रन्था" शब्दः संस्कृते न विद्यते। अतएव स्थानेस्थाने भ्रमः भवितुं अर्हति। आश्चर्यं यत् कथं संस्कृतज्ञैः अयं दोषः न अनु-भूयते। अस्यां धारायां (पैरायाम्) एकस्मिन् स्थले विद्यते 'यद्धिन्दैशियायाः' अर्थात् यद् + धिन्दैशियायाः" वस्तुनः अस्ति "यत् हिन्द-एशियायाः" एकस्य देशस्य हिन्द एशिया नाम अस्ति न तु हिन्देशिया, अथवा "धिन्दैशिया" यत् सन्धिकरणे भवति। वस्तुतः नियमः अयं कार्यः यत् "व्यक्ति-स्थान, वाचक, संज्ञाः" स्वरूपे तिष्ठन्तु। यदि "हिन्द एशिया" नाम अस्ति, तदा तत्

एव देयम् । यदि कश्चित् पुरुषः " जवाहरलाल " इति कथ्यते तदा " जवाहरलालो वदति " ' जवाहरलालः वदति " वा अस्य कथनस्य का आवश्यकता ? " जवाहरलाल वदति " तत् एव कथनीयम् " विसर्गादर्शनम् " एकेन नवीनसूत्रबलेन यस्य निर्माणं आवश्यकम्, यथा " असंहिता वाक्ये " अस्य सूत्रस्य रचनं भाषा-हिताय आवश्यकम् । एताभ्यां द्वाभ्यां सूत्राभ्यां संस्कृतकल्याण भवितुं अर्हति । इमे सूत्रे संस्कृतभाषायै सर्वकालीनं रूपं प्रदास्यतः, येन भूयः संस्कृत विश्व-भाषा भविष्यति पूर्ववत् । अन्यानि कतिपयसंशोधनानि आवश्यकानि अपि सन्ति यथा लकारेषु । अन्येषां संशोधनानां विषये अन्यत्र कथयिष्यते, परं अत्र लकाराणां विषये निवेद्यते । यद्यपि पूर्वाध्याये अपि सन्धिविषयः विशेषतया सुस्पष्ट कृतः अस्माभिः, परं अस्मिन् स्थले अपि तस्य स्पष्टीकरणं आवश्यक अभवत् । अस्य लेखस्य तृतीयधारायाः ( पैरायाः ) एकं समासस्य उदाहरण दत्वा लकाराणां विषये कथयिष्यते । तत्र विद्यते " यद्धिन्दीसंस्कृतोर्द्वंग्रेजीत्यादिविविधभाषाणां एको-ऽद्भुतः संयोगो.... ...." ।

प्रथमं " यद्धिन्दी " अवलोकनीयम् । इद विद्यते " यत् + हिन्दी " । पदसन्धिकरणे " हिन्दी " " धिन्दी " भवति, परं " धिन्दी " का भवति ? द्वितीयं " संस्कृतोर्द्वंग्रेजीत्यादिविविधभाषाणाम् " समासः अस्ति । अत्र एतेषां शब्दानां समसनं विद्यते " संस्कृत + उर्दू + अंग्रेजी + इत्यादि विविध + भाषाणाम् " । प्रथमं तु अयं समासः पठनं न आगच्छति । शुद्धोच्चारणं तु अस्य कदापि भवितुं न अर्हति । अनेन प्रकारेण अस्य उच्चारणं भविष्यति यथा 'संस्कृतोर्+द्वंग्रेजीत्यादि+विविधभाषाणाम्' । पर 'संस्कृतोर्' द्वंग्रेजीत्यादि कश्चित् शब्दः नास्ति । अतएव समासेषु अयं सुधारः

आवश्यकः यत् यत्र समासे व्यक्तिस्थानवाचकसंज्ञाः (प्रातिपदिक-रूपेण ) स्युः । अथवा एतादृशाः दीर्घसमासाः स्युः यत् शब्दानां शुद्धोच्चारणं असम्मतं जायेत तदा प्रातिपदिकरूपे शब्दाः पृथक् पृथक् देयाः । यथा अत्र लेखनीयं आसीत "संस्कृत+उर्दू-अंग्रेजी-त्यादि विविधभाषाणाम् " येन आशयः सुस्पष्टः स्यात् । संक्षेपः तु अत्र अपि सञ्जातः, परं अत्र अर्थहानिः न भवति तथा उच्चारणं अपि भवितुं अर्हति । समासेषु एतादृशस्य संक्षेपस्य कः लाभः, येन आशयः अपि स्पष्टः न स्यात् न उच्चारणं अपि भवेत् । अस्माकं तु निश्चितं मतं अस्ति यत् ' वाक्यपदेषु सन्धिः क्रियेत चेत् तदा केवलं द्वयोः पदयोः भवेत् ' । एवमेव समासः अपि अधिकादधिकं द्वित्रिशब्दानां भवेत् येन भाषा सारल्यं आगच्छेत् । अस्माकं मतानुसारं तु वाक्यपदेषु सन्धिव्याकरानुसारं न भवितुं अर्हति । विद्वद्भिः इदं सर्वं विचारणीयं एकस्यां सभायाम् । वयं अस्याः सभायाः आयोजनं कर्तुं शक्नुमः । यदि ते वाक्यपदेषु अपि सरलसन्धिपक्षे भवन्तु तदा तत् एव कार्य्यम् । उत्तमं स्यात् यत् न्यूनातिन्यूनं २५ वर्षपर्यन्तं वाक्यपदेषु सन्धिः न क्रियते । नवीनसाहित्यं गद्यात्मकं पद्यात्मकं वा एतादृशं सन्धिरहितं निर्मितं स्यात् तथा प्राचीनसाहित्यं अपि सन्धिराहित्येन प्रकाशितं स्यात् । प्राचीनग्रन्थलेखकानां भाषा तु स्वरूपे स्थास्यति, केवलं भाषासारल्यं आगमिष्यति, येन संस्कृतं भूयः अन्ताराष्ट्रियभाषा राष्ट्रभाषा च भविष्यति ।

## सन्धिरहितः लेखः सुबोधः सरलः च ।

( सम्पादकीय लेखेन अनेन प्रकारेण भवितव्यम् )

गतसप्ताहे समाचारद्वयं ईदृशं प्रकाशितं येन समस्तस्य संसारस्य, भारतस्य च वार्तां न जानामि परं अहं अवश्यं अभूवं

चकितचकितः। प्रथमः समाचारः तु काबुलविश्वविद्यालयस्य साहित्यपाठक्रमे संस्कृतस्य अनिवार्य्यं अध्ययनम्, द्वितीयः च चिदम्बरस्थाण्णामलै विश्वविद्यालयस्य पैरिसविश्वविद्यालय-संस्कृताध्यापक डा० लुई रेणुकृतं संस्कृतस्य राष्ट्रभाषात्वसमर्थनम्। विदेशीयैः कृतः अयं अत्युत्कृष्टः संस्कृतभाषायाः आदरः भारतात् उत्तरं अपेक्षते यत् तस्य कीदृशी विदेशीय भाषासु समादरबुद्धिः इति विदेशीयेषु, विदेशीयसंस्कृतिषु संस्कृते च ?

लखनऊ नगरे आचार्य्यनरेन्द्रदेवेन उक्तं आसीत् यत् भारतस्य संस्कृतज्ञैः एशियायाः भाषाः अध्ययनीयाः यतः तासु प्राचीनाः सांस्कृताः ग्रन्थाः अनूदिताः प्राप्यन्ते। गतवर्षे काशीगवर्नमेण्ट संस्कृतकालिजस्य समावर्त्तनोत्सवे महामहोपाध्याय श्री विधु-शेखरभट्टाचार्य्येण उक्त आसीत् यत् चीनभोटपालीप्राकृतभाषाणां अध्ययनं अन्तरा संस्कृताध्ययनं एव न पूर्ति याति। गतसप्ताहे काश्यां श्री सम्पूर्णानन्देन अपि अभिहितं यत् हिन्दैशियायाः पुस्तकालयेषु संस्कृतग्रन्थाः विद्यन्ते। तेषां अवलोकनं आवश्यकम्। मेरठे श्री गोविन्ददासः सिंहलश्यामभाषयोः संस्कृतप्राचुर्य्यं साधयाञ्चकार।

भारतस्थितेन रूसराजदूतेन अपि रूसे संस्कृताध्ययनोत्साहः वर्णितः। अमेरिकायाः अपि काश्चन संस्थाः संस्कृतं प्रचारयन्ति। एभि सर्वै तात्कालिके प्रमाणै ज्ञायते यत् संस्कृतभाषायाः समादरः सर्वै क्रियते, तर्हि भारतीयाः किमर्थं साधारणभाषायै हिन्द्यै कालं यापयन्त अन्ताराष्ट्रियसम्पर्कस्थापनात् विरताः भवन्ति ? वृहत्तरभारतस्य निर्माणं किं हिन्द्याधारेण सम्भाव्यते ? तस्मिन् दिने स्पष्टं उक्तं आचार्यनरेन्द्रदेवेन यत् इयं अतिलज्जायाः वार्ता एव् एतद् भारवहने हिन्दी सर्वथा असमर्था। अस्यां

अवस्थायां भारतं कूपमण्डूकीकर्त्तुं उद्यतानां हिन्दीवतां सुदृढः यः विरोधः आदिष्टः विचारवद्भयः भारतीयेभ्यः किं डा० लुई रेणोः अपराधत्वेन गणयिष्यते।

हिन्दीभाषां भारते एव न यदा केचन पृच्छन्ति तदा एतया विदेशानां सम्पर्कस्थापनं तु दूरदूरम्। अद्य वङ्गोत्कलासाममहाराष्ट्रगुर्जरदक्षिणभारतेषु कः हिन्दीं गृहीतुं उद्यतः? उत्तरभारते अपि किं सर्वे एव सन्ति हिन्दीराष्ट्रभाषात्वपक्षपातिनः न सन्ति? वङ्गाद्युक्तेषु सर्वेषु संस्कृतराष्ट्रभाषात्वपक्षपातिनां प्राचुर्यम्। अत्र अपवादाः न गण्यन्ते। अस्यां अवस्थायां हिन्द्याः राष्ट्रभाषात्वप्रख्यापनं केवलं उपहासास्पदम्। विचार्य दृश्यते तर्हि ज्ञायते यत् हिन्दीसंस्कृतोर्द्वंग्रेजीत्यादि विविधभाषाणां एकः अद्भुतः संयोगः यः संस्कृतसूत्रेण आवद्धः वर्त्तते। इत्थं हिन्दीवङ्गादिभाषावत् प्राधान्यं न बिभर्ति प्रतिक्षणं परिवर्तनशीला।

एतादृश्याः भाषायाः राष्ट्रप्रधानभाषात्वं आग्रहाविष्टैः एव साधयिष्यते। अस्मत्कथनस्य अयं आशयः यत् भारतीयाः सर्वप्रथमं संस्कृताय महत्पदं अर्पयेयुः। ततः भारतसम्बद्धविदेशीयभाषाः पठेयुः। तदनन्तरं पूर्वतः एव संस्कृतप्रभावितेषु देशेषु भारतीयाः संस्कृतं उन्नमय्य, जगद्द्वितीय-भारतीयाध्यात्मज्ञानेन तान् वशीकृत्य, स्वसंस्कृतौ समानीय शास्त्रविधिना, स्वाकारान् विरच्य विश्वशान्तिं स्थापयेयुः। सर्वथा निश्चितं एतत् विश्वशान्तिः भारतीयादर्शस्थापनं अन्तरा न सम्भवा। अस्माकं राष्ट्रपतिः विश्वशान्तिं इच्छति तदर्थं भारतीयैः संस्कृतराष्ट्रभाषात्वे विलम्बः न विधेयः। संस्कृतं शान्तिमूलम्।

भारते केचन जनाः उर्दूफारस्यरबीशब्दानां विरोधं कृत्वा साम्प्रदायिकतां प्रचारयन्ति, प्रसारयन्ति यदा अस्माकं असाम्प्र-

दायिकः सरकार साम्प्रदायिकताप्रचारकाणां न केवल विरोध एव करोति प्रत्युत तान् दण्डयति अपि। यस्य साम्प्रदायिकतावादस्य जनतायाः सरकारः स्थितिं न कामयते त एव सरकाराधिष्ठात्री जनता एव काचित् सङ्घीभूय प्रसह्य यदि संस्थापयेत् तर्हि महाखेद एव। विश्वशान्तिस्थापका भारतीया समस्त जगत् आत्मसदृश मन्वाना न कस्यचित् विदेशीयस्य धर्मस्य, सम्प्रदायस्य जनस्य आहित असत्कारं वा चिन्तयन्ति न कस्याश्चित् विदेशीयाया संस्कृतेः वा भाषायाः वा। भारतीयानां विचारे तु तद्देशवासिनां धर्मसम्प्रदायसंस्कृतिभाषा यथा तेभ्यं इष्टा सम्मान अर्हन्ति तथा एव अस्माकं अपि। भारतीयानां अय उदारः सिद्धान्तः 'स्वे स्वे कर्मणि अभिरत संसिद्धिं लभते नर'' 'स्वधर्मे निधनं श्रेय परधर्मः भयावह'' 'सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः। सर्वे भद्राणि पश्यन्तु मा कश्चिद् दु खभाग् भवेत्' इति।

भारतीया तु पूर्वत एव उपदिशन्ति यत् सर्वे सधर्मकर्मसम्प्रदाय संस्कृतिभाषासु सुदृढाः स्यु। ते न कस्यचित् धर्मादीना ग्रहण इच्छन्ति न परेषां स्वस्मिन् समावेशनम्। इत्थ एकसंस्कृतिप्रचार कारका अपि विदेशीयशब्दबहिष्कारका इव साम्प्रदायिकताप्रचारकाः एव वक्ष्यन्ते। अस्माकं पुरातन एतत् मत यत् कस्याश्चित् अपि भाषाया रूढिगता सज्ञाशब्दा तद्रूपे एव ग्राह्या। एतेषा संस्कृतीकरण अनुचितम्। एतस्मात्कारणात् एवभारतीयविद्याजानुष्ठिताना शब्दानां यत् संस्कृतीकरणं अकारि कैश्चित् तत् न उचित अस्माभिः मतम्। परभाषाशब्दग्रहणं तु साधारणी वार्ता अह तु भारते सर्वासां विदेशीयभाषाणां अध्ययन अध्यापनं कामये। अर्वाजन्यभाषा तु एक प्रकारेण तथा एव सांस्कृता यथा हिन्दीप्रभृतयः। गतदिने एव उक्त अफगानराजदूतेन पश्तोभाषा संस्कृतात् उत्पन्ना प्रभाविता च इति।

अस्यां अवस्थायां उर्दूसंश्लिष्टायाः हिन्दुस्तान्याः विरोधे अनौचित्यं अवलोकयामः वयं यतः उर्दूः एश्तो अरवीभाषा प्रभाविता ततः निस्सृता च ।

परभाषासंस्कृत्यादिग्रहणे केचन भीताः भारतीयाः स्वभाषासंस्कृतिवैकृत्यमनुचिन्तयन्ति। एतादृशं चिन्तनं भयानकं अज्ञानं तेषां संस्कृतशक्तौ प्रकटयति।ते न विचारयन्ति यत् संस्कृतभाषा जगति अद्वितीयशक्तिमती। यावत् सा भारते विद्यते तावत् समस्त संसारस्य अपि भाषाः कदाचित् अपि न तां उच्छेत्तुं शक्ताः न तदाश्रितां भारतीयां संस्कृतिम्। ताः तु सर्वाः एव संस्कृतं सम्मुखीभूय दासीभूताः भविष्यन्ति। भारतीयैः अंग्रेजराज्ये संस्कृतं परित्यक्तं अतः एव अत्र अचिरस्थायिनी विदेशीयता दृश्यते। भारतयिराज्ये आपि ये जनाः संस्कृतस्य राष्ट्रप्रधानभाषात्वं अस्वीकृत्य हिन्दीं प्रचारयन्ति ते अनुचितं आचरन्ति। भारते सर्वाविधा भीतिः संस्कृतत्यागेन एव सम्भवा। सत्यं उच्यते माननीय श्री अणे महोदयादिभिः संस्कृतं यदि न स्थास्यति तर्हि भारतं अपि न स्थास्यति भारतीया संस्कृतिः च अपि न स्थास्यति इति।

केचन संस्कृतं ब्राह्मणानां भाषां संलाप्य, तां एकदेशीयां केवलं ज्ञानभाषां प्रचार्य, तस्य विश्वभाषात्वं उच्छेद्य अनुचितं अर्चकाणां खिलीकरणं आकाङ्क्षमाणाः व्यवहारानर्हत्वं उद्घोष्य राष्ट्रभाषात्वं खण्डयन्ति। ते न जानन्ति यत् संस्कृतसेवकेषु आचाण्डालं आशूद्र द्विजातयः अपि सन्ति जनाः, बौद्धाः, खिष्टानाः, मुसलमानाः तथा अन्यदेशीयाः अपि। ब्रह्मवत् जगद्व्याप्तायाः ब्राह्मयाः जगन्मातुः अयं अनादरः सर्वथा सोढुं अयोग्यः। एतस्मात्कारणात् अस्माभिः भारतीयैः संस्कृतस्य एव राष्ट्रभाषात्वं अङ्गीकृत्य प्रकटीकरणीयं यत् यस्याः भाषायाः विदेशीयाः सत्कारं कुर्वन्ति तस्याः भारतं पूर्वतः

एव अर्चनं करोति, प्रधानपदे च संस्थापयति। इदं एव अस्माकं स्वदेशीयसंस्कृतसमादरणस्य समुचितं उत्तरं भवितुं अर्हति यत अपेक्षते अद्य संसारः।

व्याख्या—(१) सर्वे जनाः सन्धिरहितं लेखं सरलतया अबाधरूपेण पठितुं शक्नुवन्ति। सन्धिरहिते लेखे पदानि पृथक् पृथक् तथा स्वरूपे विद्यन्ते, अतएव तेषां सर्वेषां शब्दोच्चारणं अपि भवितुं अर्हति। विविधपदानां स्वरूपज्ञानं अपि सरलतया भवितुं अर्हति।

व्याख्या—(२) सम्पादकमहोदस्य सर्वैः विचारैः सह सहमति आवश्यका न अस्ति। इद आवश्यक निवेदनं कृत्वा लकाराणां विषये पुनः दीयते।

## चतुर्लकाराः।

इदं निवेदितं अस्माभिः यत् लौकिकसंस्कृते केवलं चतुर्लकाराणां आवश्यकता विद्यते। इदमपि कथित अस्माभिः यत् द्विवचनस्य आवश्यकता नास्ति। इदमपि ज्ञात पाठकैः यत् एकस्य एव "डुकृञ्" धातोः प्राय ७५१२ रूपाणि भवन्ति। कश्चित् नापि संस्कृतज्ञ इमानि सर्वाणि रूपाणि स्मर्तुं न शक्नोति। बहूनि रूपाणि न प्रयुज्यन्ते। इद अपि पूर्णतया सिद्धं कृतं अस्माभिः यत अद्यतन-अनद्यतनभेदं अवलम्ब्य विविधलकाराणां आवश्यकता न विद्यते। इम भेद अवलम्ब्य लकारेषु विभागः क्रियते चेत् तदा अन्ये अपि अनन्ताः भेदाः भवितुं अर्हन्ति। तदा अयमपि प्रश्न उपतिष्ठते यत् प्रहर-प्रहर क्षणक्षणयुत भेदं अवधार्य लकार विभागः कथ न स्यात्। अतएव व्यावहारिकदृष्ट्या केवल चतुर्लकाराणां आवश्यकता वर्तते यथा संसारस्य अन्यासु भाषासु अघ लोक्यते। प्राय सर्वासु भाषासु मुख्यरूपेण चतुर्लकाराः एव अवलोक्यन्ते। ते एव संस्कृतभाषाया अपि भवन्ति। इदमपि कथितं

अस्माभिः यत् सर्वे लकाराः संस्कृतभाषायां स्वरूपे तिष्ठेयुः तदा प्रायः ३६ लक्षतः अधिकरूपाणि १९४४ धातूनां भविष्यन्ति। अयं व्यापारः संस्कृते वर्णनातीतं काठिन्यं आनेतुं शक्तः। अतएव तत् एव करणीयं यत् व्यावहारिकदृष्ट्या भाषादृष्ट्या च उचितं स्यात्। संसारस्य कस्यांचित् अपि भाषायां एतादृशानि ३६ लक्षाधिकरूपाणि न विद्यन्ते क्रियाणाम्।

## द्विवचननिस्सारणं व्याकरणसम्मतम्।

बहूनि कारणानि दत्तानि अस्माभिः यत् कथं संस्कृतभाषायां अपि द्विवचनस्य आवश्यकता नास्ति। इदं संस्कृतव्याकरण-सम्मतं अपि एकेन सूत्रेण प्रतीयते यत् अधः दीयते। व्यवहारे अपि एकवचनस्य स्थाने बहुवचनस्य प्रयोगः अवलोक्यते यथा—

"पं० रामशङ्करमहोदयाः महाविद्वांसः सन्ति"

यदि एकवचनस्य स्थाने बहुवचनस्य प्रयोगः भवितुं अर्हति तदा द्विवचनस्य स्थाने बहुवचनस्य प्रयोगः कथं न स्यात्। अनेन द्विवचनस्य सर्वथा निस्सारणं अपि सम्भवति येन भाषा-सौविध्यं आगच्छेत्। सूत्रं इदमस्ति,

" अस्मदो द्वयोश्च " १।२।५९

व्याख्या— एकत्वे द्वित्वे च विवक्षिते अस्मदः बहुवचनं वा स्यात्। वयं ब्रूमः। पक्षे अहं ब्रवीमि, आवां ब्रूवः। अनेन सिध्यति यत् द्विवचनस्य स्थाने बहुवचनस्य प्रयोगः व्याकरण-सम्मतः अस्ति। पूर्वोदाहरणात् अर्थात् " पं० रामशङ्करमहोदयाः महाविद्वांसः सन्ति " सिद्धं भवति यत्—

" अस्मदो द्वयोश्च "

सूत्रस्य सिद्धान्तः अत्र स्वीकृतः विद्यते। एवमेव द्विवचनस्य स्थाने अपि भवितुं अर्हति। द्विवचनस्य प्रयोगः अपि बाहुल्येन

न भवति, अतएव तस्य निस्सारणं आवश्यकं युक्तियुक्त च। क्रियायां एवमेव संज्ञायां द्विवचनस्य निस्सारणात् वर्णनातीत सारल्य संस्कृते आगमिष्यति तथा क्रियाया एवमेव संज्ञायां रूपाणि अपि न्यूनानि भविष्यन्ति। अत्र क्रियायाः विषये द्विवचन निस्सार्य 'डुकृञ्' धातो रूपाणि दीयन्ते। संज्ञाया विषये अन्यत्र दास्यते। एक अन्यत् अपि संशोधन आवश्यक प्रतीयते। यत्र एकस्य धातोः यथा 'डुकृञ्' धातो एकार्थं अनेकानि रूपाणि चलन्ति एकस्मिन् लकारे तत्र एक रूपं देयम्। यथा डुकृञ् धातोः यङन्तप्रकरणे एकार्थं यङ्लुगन्ते अपि रूपाणि चलन्ति अतएव यङन्तप्रकरणे दत्तानि रूपाणि प्रशस्तानि स्यु अर्थात् मानितानि स्यु.। एवमेव अन्येषु स्थलेषु अपि मन्येत। यदा अस्माक मतानुसार लकारेषु अद्यतन अनद्यतनभेद न स्थास्यति तदा लट् वर्त्तमाने, लट् सामान्यभविष्यत्काले, लङ् सामान्य-भूतकाले, तथा लिङ् विध्यादौ, तथा हेतुहेतुमद्भावे च प्रयुक्त स्यात्। द्विवचनस्य निस्सारणे चतुर्लकाराणां इमानि रूपाणि भविष्यन्ति।

## चतुर्लकाराणां रूपाणि।

(लट्)

| परस्मैपदे | | आत्मनेपदे | |
|---|---|---|---|
| करोति, | कुर्वन्ति | कुरुते, | कुर्वते |
| करोषि, | कुरुथ | कुरुषे, | कुरुध्वे |
| करोमि, | कुर्मः | कुर्वे, | कुर्महे |

(लट्)

| | | | |
|---|---|---|---|
| करिष्यति, | करिष्यन्ति | करिष्यते, | करिष्यन्ते |
| करिष्यसि, | करिष्यथ | करिष्यसे, | करिष्यध्वे |
| करिष्यामि, | करिष्याम, | करिष्ये, | करिष्यामहे |

परस्मैपदे (लङ्) आत्मनेपदे

| परस्मैपदे | | आत्मनेपदे | |
|---|---|---|---|
| अकरोत्, | अकुर्वन्, | अकुरुत, | अकुर्वत |
| अकरोः, | अकुरुत, | अकुरुथाः, | अकुरुध्वम् |
| अकरवम्, | अकुर्म, | अकुर्वि, | अकुर्महि |

(विधिलिङ्)

| | | | |
|---|---|---|---|
| कुर्यात्, | कुर्युः, | कुर्वीत, | कुर्वीरन् |
| कुर्याः, | कुर्यात, | कुर्वीथाः, | कुर्वीध्वम् |
| कुर्याम्, | कुर्याम, | कुर्वीय, | कुर्वीमहि |

कर्मवाच्ये

(लट्)

क्रियते, क्रियन्ते
क्रियसे, क्रियध्वे
क्रिये, क्रियामहे

एवमेव आत्मनेपदे अपि रूपाणि [illegible]यन्ति।

(लृट्)

करिष्यते, करिष्यन्ते
करिष्यसे, करिष्यध्वे
करिष्ये, करिष्यामहे

(लङ्)

अक्रियत, अक्रियन्त
अक्रियथाः, अक्रियध्वम्
अक्रिये, अक्रियामहि

(लिङ्)

क्रियेत, क्रियेरन्
क्रियेथाः, क्रियेध्वम्
क्रियेय, क्रियेमहि

○ प्रेरणार्थे-णिच् प्रत्यये-

| परस्मैपदे | | (लट्) | आत्मनेपदे | |
|---|---|---|---|---|
| कारयति, | कारयन्ति | | कारयते, | कारयन्ते |
| कारयसि, | कारयथ | | कारयसे, | कारयध्वे |
| कारयामि, | कारयामः | | कारये, | कारयामहे |

(लृट्)

| | | | |
|---|---|---|---|
| कारयिष्यति, | कारयिष्यन्ति | कारयिष्यते, | कारयिष्यन्ते |
| कारयिष्यसि, | कारयिष्यथ | कारयिष्यसे, | कारयिष्यध्वे |
| कारयिष्यामि, | कारयिष्यामः | कारयिष्ये, | कारयिष्यामहे |

(लङ्)

| | | | |
|---|---|---|---|
| अकारयत्, | अकारयन् | अकारयत, | अकारयन्त |
| अकारय, | अकारयत | अकारयथा, | अकारयध्वम् |
| अकारयम्, | अकारयाम | अकारये, | अकारयामहि |

(लिङ्)

| | | | |
|---|---|---|---|
| कारयेत्, | कारयेयुः | कारयेत, | कारयेरन् |
| कारयेः, | कारयेत | कारयेथा, | कारयेध्वम् |
| कारयेयम्, | कारयेम | कारयेय | कारयेमहि |

णिजन्तस्य 'कृ' धातोः कर्मवाच्ये रूपाणि।

(लट्)

| | | |
|---|---|---|
| कार्यते, | कार्यन्ते | आत्मनेपदे समानरूपाणि भवन्ति। |
| कार्यसे, | कार्यध्वे | |
| कार्ये, | कार्यामहे | |

९

(लृट्)

| | | |
|---|---|---|
| कारिष्यते, | कारिष्यन्ते | आत्मनेपदे समानरूपाणि भवन्ति। |
| कारिष्यसे, | कारिष्यध्वे | |
| कारिष्ये, | कारिष्यामहे | |

(लङ्)

| | |
|---|---|
| अकार्यत, | अकार्यन्त |
| अकार्यथाः, | अकार्यध्वम् |
| अकार्ये, | अकार्यामहि |

(लिङ्)

| | |
|---|---|
| कार्येत, | कार्येरन् |
| कार्येथाः, | कार्येध्वम् |
| कार्येय, | कार्येमहि |

'कृ' धातोः सन् प्रत्ययान्तस्य रूपाणि।

(लट्)

| | | |
|---|---|---|
| चिकीर्षति, | चिकीर्षन्ति | आत्मनेपदे समानरूपाणि भवन्ति। |
| चिकीर्षसि, | चिकीर्षथ | |
| चिकीर्षामि, | चिकीर्षामः | |

(लृट्)

| | |
|---|---|
| चिकीर्षिष्यति, | चिकीर्षिष्यन्ति |
| चिकीर्षिष्यसि, | चिकीर्षिष्यथ |
| चिकीर्षिष्यामि, | चिकीर्षिष्यामः |

(लङ्)

| | |
|---|---|
| अचिकीर्षत्, | अचिकीर्षन् |
| अचिकीर्षः, | अचिकीर्षत |
| अचिकीर्षम्, | अचिकीर्षाम |

(लिङ्)

चिकीर्षेत्, चिकीर्षेयुः
चिकीर्षेः, चिकीर्षेत
चिकीर्षेयम्, चिकीर्षेम

कर्मवाच्ये रूपाणि।

(लट्)

चिकीर्ष्यते, चिकीर्ष्यन्ते — आत्मनेपदे समानरूपाणि भवन्ति।
चिकीर्ष्यसे, चिकीर्ष्यध्वे
चिकीर्ष्ये, चिकीर्ष्यामहे

(लृट्)

चिकीर्षिष्यते, चिकीर्षिष्यन्ते
चिकीर्षिष्यसे, चिकीर्षिष्यध्वे
चिकीर्षिष्ये, चिकीर्षिष्यामहे

(लङ्)

चिकीर्ष्येत, चिकीर्ष्येरन्
चिकीर्ष्येथाः, चिकीर्ष्येध्वम्
चिकीर्ष्येय, चिकीर्ष्येमहि

पुनः पुनः अतिशयार्थे यङ् प्रत्ययान्तस्य 'कृ' धातोः रूपाणि।

(लट्)

चेक्रीयते, चेक्रीयन्ते — आत्मनेपदे समानरूपाणि भवन्ति।
चेक्रीयसे, चेक्रीयध्वे
चेक्रीये, चेक्रीयामहे

(लृट्)

चेक्रीयिष्यते, चेक्रीयिष्यन्ते
चेक्रीयिष्यसे, चेक्रीयिष्यध्वे
चेक्रीयिष्ये, चेक्रीयिष्यामहे

❀

(लङ्)

| | | |
|---|---|---|
| अचेक्रीयत, | अचेक्रीयन्त | आत्मनेपदे समानरूपाणि भवन्ति। |
| अचेक्रीयथाः, | अचेक्रीयध्वम् | |
| अचेक्रीये, | अचेक्रीयामहि | |

(लिङ्)

चेक्रीयेत, चेक्रीयेरन्
चेक्रीयेथाः, चेक्रीयेध्वम्
चेक्रीयेय, चेक्रीयेमहि

कर्मवाच्ये।

(लट्)

| | | |
|---|---|---|
| चेक्रीय्यते, | चेक्रीय्यन्ते | आत्मनेपदे समानरूपाणि भवन्ति। |
| चेक्रीय्यसे, | चेक्रीय्यध्वे | |
| चक्रीय्ये, | चेक्रीय्यामहे | |

(लृट्)

चेक्रीयिष्यते, चेक्रीयिष्यन्ते
चेक्रीयिष्यसे, चेक्रीयिष्यध्वे
चेक्रीयिष्ये, चेक्रीयिष्यामहे

(लङ्)

अचेक्रीय्यत, अचेक्रीय्यन्त
अचेक्रीय्यथाः, अचेक्रीय्यध्वम्
अचेक्रीय्ये, अचेक्रीय्यामहि

(लिङ्)

चेक्रीय्येत, चंक्रीय्येरन्
चेक्रीय्येथाः, चेक्रीय्येध्वम्
चेक्रीय्येय, चेक्रीय्येमहि

(१) व्याख्या— एकमेव द्विवचनस्य निस्सारणे भूतकाल-निष्ठायां त्रिलिङ्गेषु क्त, क्तवतु प्रत्ययोः ८४ रूपाणि भविष्यन्ति यथा—

( पुँल्लिङ्गे )

| | | |
|---|---|---|
| कृतः, | कृता | ( प्रथमा ) |
| कृतम्, | कृतान् | ( द्वितीया ) |
| कृतेन, | कृतैः | ( तृतीया ) |
| कृताय, | कृतेभ्यः | ( चतुर्थी |
| कृतात्, | कृतेभ्यः | ( पञ्चमी ) |
| कृतस्य, | कृतानाम् | ( षष्ठी ) |
| कृते, | कृतेषु | ( सप्तमी ) |

( पुँल्लिङ्गे )

| | |
|---|---|
| कृतवान्, | कृतवन्तः |
| कृतवन्तम्, | कृतवतः |
| कृतवता, | कृतवद्भिः |
| कृतवते, | कृतवद्भ्यः |
| कृतवतः | कृतवद्भ्यः |
| कृतवतः | कृतवताम् |
| कृतवति, | कृतवत्सु |

एवमेव अन्यानि रूपाणि स्त्रीलिङ्गे नपुंसकलिङ्गे च भविष्यन्ति। सर्वाणि रूपाणि ८४ भविष्यन्ति।

(२) व्याख्या-द्विवचनस्य निस्सारणे 'डुकृञ्' धातोः चतुर्लकारेषु २४० रूपाणि भविष्यन्ति। अनेन प्रकारेण सर्वयोगः ३२४ भवति अर्थात् २५१२ रूपाणां स्थाने केवलं ३२४ रूपाणि भविष्यन्ति, यानि कश्चित् अपि पुरुषः स्मर्तुं शक्नोति। इदं सर्वं पठित्वा संस्कृतज्ञाः अस्मिन् परिणामे आगमिष्यन्ति यत् इमानि सर्वाणि धनानि आवश्यकानि सन्ति।

(३) व्याख्या— द्विवचनं निस्सारितं स्यात्, इदं अस्ति अस्माकं निश्चितं मतम्। परं द्विवचनस्य ज्ञानाय प्रदर्शनाय वा एकः अन्यः अपि उपायः भवितुं अर्हति। बहुवचनान्तशब्दैः सह "उभय" शब्दस्य प्रयोगः कृतः स्यात् यथा "द्विजनाः आगच्छन्ति" अथवा "उभयजनाः इदं कार्यं कुर्वन्ति"। वस्तुतः अस्य उपायस्य अपि आवश्यकता न प्रतीयते, यतो हि प्रसङ्गेन सर्वं ज्ञातं भवति। यथा संसारस्य अन्यासु भाषासु अवलोक्यते यासु द्विवचनं नास्ति। यथा तत्र भवति तद् एव संस्कृतभाषायां अपि भविष्यति। संस्कृतभाषा अपवादरूपेण स्थातुं न शक्नोति।

(४) व्याख्या— संस्कृतज्ञेषु एका शङ्का भवितुं अर्हति। सामान्यभूतकाले लङ् लकारस्य प्रयोगः अङ्गीकृतः अस्माभिः। बहवः विद्वांसः लुङ्लकारस्य प्रयोगं स्वीकर्त्तुं शक्नुवन्ति यतो हि लुङ्लकारस्य प्रयोगः सामान्यभूतकाले भवति एव। परं अस्मिन् विषये अस्माकं विशेषनिवेदनं इदं अस्ति। प्रथमं तु निवेदितं अस्माभिः यत् अद्यतन-अनद्यतनभेदं अवलम्ब्य लकारेषु कस्यचित् विभागस्य आवश्यकता नास्ति। यदि इदं संशोधनं अङ्गीक्रियते विद्वद्भिः भाषासारल्याय येन संस्कृतभाषा शीघ्राति-शीघ्रं देशस्य राष्ट्रभाषा भवेत् तदा लङ् लुङ् लकारयोः कश्चित् अपि भेदः न स्यातुं शक्नोति। लङ् लकारस्य रचना प्रयोगः वा सरलः भवति सार्वधातुकप्रत्यययोगवशात्। लुङ्लकारस्य निर्माणं आर्धधातुकप्रत्यययोगवशात् कठिनं भवति। तथापि यदि पण्डितसमाजः लुङ्लकारस्य प्रयोगं लङ्लकारस्य स्थाने अङ्गी-कुर्यात् तदा काचित् अपि आपत्तिः हानिः वा नास्ति।

---

# अध्यायः ४

## संज्ञाः ।

अस्मिन् सम्बन्धे अस्माकं निवेदनं इदं अस्ति यत् यथा क्रियासु द्विवचनस्य आवश्यकता न अस्ति, एवमेव संज्ञासु अपि न विद्यते। इदं संशोधन आवश्यकं अस्ति। अनेन संस्कृते यथेच्छं सारल्यं आगमिष्यति। द्वितीयं संबोधनकारकस्य अपि आवश्यकता न प्रतीयते। यथा कर्तृकारके संज्ञायाः रूपाणि विद्यन्ते, तानि एव संबोधने तिष्ठन्तु। उदाहरणार्थं दीयते,—

| एकवचनम् | बहुवचनम् | विभक्ति | कारकः |
|---|---|---|---|
| रामः | रामाः | प्रथमा | ( कर्तृकारकः ) |
| *रामम्* | *रामान्* | *द्वितीया* | *( कर्मकारकः )* |
| रामेण | रामैः | तृतीया | ( करणकारक ) |
| रामाय | रामेभ्यः | चतुर्थी | ( सम्प्रदानकारक ) |
| रामात् | ,, | पञ्चमी | ( अपादानकारकः ) |
| रामस्य | रामाणाम् | षष्ठी | ( सम्बन्धकारकः ) |
| रामे | रामेषु | सप्तमी | ( अधिकरणकारकः) |

( १ ) व्याख्या—गताध्याये पूर्णरूपेण व्याख्या कृता अस्माभि यत् द्विवचनस्य आवश्यकता न अस्ति। द्विवचनं संसारस्य अन्यासु भाषासु न विद्यते जर्मनभाषादिकं विहाय। एकं अनेकं वा भेदं अवधार्य वचनं तु भवितुं अर्हति। द्विवचनं दीयेत चेत् तथा त्रिवचनेत्यादिकं कथं न दीयेत। अतएव द्विवचन स्याउर्यम्। व्यावहारिकदृष्ट्या इदं संशोधनं युक्तियुक्त तथा आवश्यकं जातं अस्ति। प्रायः सर्वे जनाः कथयन्ति यत् द्विवचन-कारणात् अपि संस्कृतभाषायां काठिन्यं विद्यते। द्विवचनस्य

विविधकारकेषु विविधानि रूपाणि भवन्ति। यानि शीघ्रतया स्मृतिपथे न आगच्छन्ति। काठिन्यकारणात् द्विवचनस्य प्रयोगः अपि न क्रियते जनैः। इदं अपि सिद्धं कृतं अस्माभिः यत् अयं सिद्धान्तः व्याकरणसम्मतः विद्यते यथा—

"अस्मदो द्वयोश्च"। १।२।५९

(एकत्वे द्वित्वे च विवक्षिते अस्मदः बहुवचनं वा स्यात्। वयं ब्रूमः, पक्षे अहं ब्रवीमि, आवां ब्रूवः वा)

अयं सिद्धान्तः सर्वत्र स्वीक्रियते अद्य, न केवलं 'अस्मत्' शब्दे। एकवचनस्य स्थाने तु प्रायः बहुवचनस्य प्रयोगः क्रियते यथा पं०रामकृष्ण, श्यामकृष्णमहोदयाः वा महाविद्वांसः सन्ति। एवमेव अन्यस्थलेषु प्रयोगः अवलोक्यते। अनेन सिध्यति यत् बहुवचनस्य प्रयोगः सरलतया भवितुं अर्हति द्विवचनस्य स्थाने। द्वितीयं इदं अपि स्पष्टीकृतं अस्माभिः यत् प्रसङ्गेन सर्वं ज्ञातं भवितुं अर्हति। अतएव द्विवचनस्य दूरीकरणं सर्वथा हितकरम्।

(२) व्याख्या— सम्बोधनकारकस्य आवश्यकता न अस्ति। भवेत् चेत् तदा कर्तृकारकस्य रूपाणि प्रयुक्तानि स्युः। वस्तुतः केवलं व्यक्तिवाचकसंज्ञायां सम्बोधनकार्यं भवितुं अर्हति। स्थानवाचक- भाववाचक- जातिवाचकेत्यादि संज्ञासु एवमेव सर्वनामसु सम्बोधनकार्यं भवितुं न अर्हति। अतएव सम्बोधन-कारकस्य सर्वप्रदाने कः लाभः? महदाश्चर्यस्य इयं वार्त्ता यत्कश्चित् अपि विद्वान् अस्मिन् सम्बन्धे विचारं न करोति। समये समये यदि विद्वद्भिः विचारः कृतः स्यात् तदा व्याकरणात् अनावश्यकनियमाः निस्सारिताः भवितुं अर्हन्ति, आवश्यक-नियमाः आवश्यकसंशोधनानि वा दत्तानि भवितुं अर्हन्ति, येन संस्कृतभाषा सदैव जीविता सबला शुद्धा च तिष्ठेत्।

अद्य अनेके नियमाः वार्त्तिकानि वा अनावश्यकानि जातानि सन्ति, यानि संस्कृतभाषायाः वृद्धिमार्गे आगच्छन्ति। अतएव अस्माकं निश्चितं मतं अस्ति यत् न्यूनातिन्यूनं प्रति २५ वर्षानन्तरं सर्वेषां भारतीय महाविदुषां एका सभा अवश्यमेव भवेत् या संस्कृत-भाषावृद्धिविषये विचारं कुर्यात्। तदा ते सर्वे उपाया अवलम्बनीयाः येन भाषावृद्धिः भवेत्, तानि सर्वाणि कण्टकानि दूरीकरणीयानि, यानि वृद्धिमार्गे बाधां उत्पादयन्ति। इदं मतं पूर्वं अपि दत्तं अस्माभिः, तथा आसन्न स्थले अपि दीयते। यथा तृणादिकं वृक्षस्य, शस्यस्य वा वृद्धौ बाधकं भवति, तथा अद्य अनेकानि अनावश्यक-वार्त्तिकानि अनेके अनावश्यकानियमाः वा संस्कृतव्याकरणे भाषावृद्धिबाधका भवन्ति। यथा शस्यहिताय वृक्षकल्याणाय वा तृणादिकस्य दूरीकरणं आवश्यकं भवति, एवमेव भाषावृद्धये अनावश्यकवस्तूनां दूरीकरणं आवश्यक-वस्तूनां मेलनं अनिवार्य्यं भवति। संस्कृतभाषावृक्षस्य अध एतानि तृणानि जातानि सन्ति यत् अद्य तस्य वृद्धिः अवरुद्धा तिष्ठति। न केवलं एतत् अपि तु अद्य सा मृतप्राया जाता अस्ति। अत एव जीवनसंचाराय स्फूर्तिदानाय वा तृणकर्त्तनं आवश्यकम्, अन्यथा सा मृता भविष्यति।

(३) व्याख्या— अयं नियमः कार्यः यत् व्यक्तिवाचक-स्थान-वाचकसंज्ञासु विसर्गस्य प्रयोगः न करणीयः। संस्कृते विसर्गस्य प्रयोगः अत्यधिकं भवति। संसारस्य अन्यासु भाषासु एवमेव प्रयोगः न भवति। भारतस्य अन्यासु प्रान्तीय भाषासु विसर्गस्य प्रयोग न भवति। भवति चेत् तदा एतावान् न भवति यथा संस्कृते अवलोक्यते। कारणं इदं अस्ति यत् संस्कृतं एका संस्कृता भाषा विद्यते अर्थात् लौकिकसंस्कृतस्य प्रथम व्याकरण अनन्तरं व्याकरणानुरूपेण

संस्कृतभाषा निर्मिता। प्रथमं सर्वे शब्दाः संज्ञाप्रकरणे प्रातिपदिकरूपत्वेन तिष्ठन्ति।

अनन्तरं तेषु सुप्-आदि विविधप्रत्ययाः लगन्ति। अनेके प्रत्ययाः अपि लगन्ति स्थाने स्थाने। अनेन विसर्गस्य प्रयोगः प्रायः सर्वेषु स्थलेषु अवलोक्यते सञ्ज्ञासु एवमेव क्रियासु। वस्तुतः कृत्रिमोपाय अयं यः प्राचीनैः विद्वद्भिः तस्मिन् काले अङ्गीकृतः॥ इदं सत्यमस्ति यद्विसर्गप्रयोगस्य न्यूनीकरणाय एवमेव पदेषु संक्षेपानयनाय सन्धिः निर्मितः। परं अनेन काठिन्यमपि उत्पन्नं संस्कृतभाषायां यत् अन्यासु भाषासु ईदृशं न अवलोक्यते। अत एव इदमावश्यक अस्ति यत् विशेषव्यक्तिस्थानवाचकसंज्ञाः यथासाध्य स्वरूपे तिष्ठन्तु येन तासु विरूपता न आगच्छेत्।

संस्कृते विरूपता आगच्छति। अस्य द्वे कारणे स्तः। प्रथमं तु विशेषव्यक्तिस्थाननामसु अपि विसर्गस्य प्रयोग क्रियते। कदापि कदापि तेषु सन्धि क्रियते येन परिवर्तनं जायते तथा शुद्ध-नामोच्चारण न भवति। द्वितीयं कारण इदं आस्ति यत् संस्कृते विभक्तयः शब्दाङ्गानि भवन्ति येन विशेषव्यक्तिस्थाननामसु अपि परिवर्त्तनं जायते। प्राचीनाचार्य्यैः अपि इमे प्रश्नाः विचारिताः-प्रतीयन्त। विशेषव्यक्तिनामसु यथा रामलाल, श्यामलाल-इत्यादिषु 'महोदय' शब्दस्य योगं कृत्वा 'महोदय' शब्दे विभक्ती कुर्वन्तिस्म। येन नामसु परिवर्तनं न आगच्छेत्। 'रामलालमहोदयेन, रामलालमहोदयाय' इत्यादीनि रूपाणि भवन्ति, येन 'रामलाल' शब्दे परिवर्त्तनं विरूपता वा न आगच्छति।

नाम तु 'रामलाल' अस्ति, परं संस्कृते 'रामलालः' एकवचने 'रामलालौ' द्विवचने तथा 'रामलालाः' बहुवचने ( कर्तृकारके ) एवमेव अन्यविभक्तिषु कथ्यन्ते। संस्कृते 'रामलाल' शब्दः

'प्रातिपदिकम्' इति कथ्यते। अनन्तरं 'सु' आदि प्रत्ययाः प्रातिपदिकेषु दीयन्ते येन प्रातिपदिकानि पदवाच्यानि स्युः। भाषा-विविधपदानां समूहः। अन्यासु भाषासु इदं न अवलोक्यते। तत्र तु शब्दाः प्रथमावस्थायां अर्थात् प्रातिपदिकरूपत्वेन तिष्ठन्ति, अनन्तर कारकेषु विविधचिह्नानि पृथक् पृथक् शब्दाङ्गत्वेन वा दीयन्ते। संस्कृतभाषायां तथा अन्यासु भाषासु अयं मुख्यभेदः। यद्यपि सर्वाः भाषाः वैदिकभाषातः निस्सृताः।

वैदिकभाषा अर्थात् वेदभाषा मूलस्रोतः सर्वासाम्। लौकिक-संस्कृतं अपि वेदभाषातः प्रायः स्वरूपे निस्सारितम्, अन्याः भाषाः अंशरूपत्वेन निस्सृताः। भेदः सुस्पष्टः। संस्कृतस्य प्रथमं व्याकरणं रचितम्, अनन्तरं संस्कृतभाषा प्रचालिता। अन्याः भाषाः प्रथमं प्रचलिताः, अनन्तर तासां व्याकरणं निर्मितम्। अतएव लौकिकसंस्कृते 'कृत्रिमता' विद्यते एव। इयं 'कृत्रिमता' अस्वाभाविकता वा आवश्यकसंशोधनैः व्यवहारसिद्ध-प्रयोगैः वा दूरीकरणीया। यथा अन्यासु भाषासु क्रियते तत् एव संस्कृते क्रियेत येन संस्कृतभवनं सुदृढं स्यात्। वयं आमूल-चूलपरिवर्त्तनं न कामयामहे, येन सर्वस्वं नष्टं स्यात्। वयं तु संस्कृतसाहित्यस्य ऋषि-महर्षि-प्रदत्त-ज्ञान भाण्डारस्य, अध्यात्म-ज्ञानस्य वेदज्ञानस्य संरक्षणाय एवमेव संस्कृतराष्ट्रभाषात्वाय, अन्ताराष्ट्रियभाषात्वाय वा संशोधनानि कामयामहे, येन अस्माकं संस्कृतं प्रगतिशीलभाषासु जीवितभाषासु वा प्रथम-स्थानं प्राप्नुयात्। तासां सर्वासां भाषाणां शिरोमणिः शिरोमुकुटं वा स्यात्।

अतएव विशेषव्यक्तिवाचकशब्दानां विषये अयं नियमः कार्यः, संशोधनं अङ्गीकरणीयं वा यत्ते स्वरूपे तिष्ठन्तु। एकस्य नवीनसूत्रस्य यथा 'विसर्गादर्शनम्' बलेन विशेषव्यक्तिस्थान-

वाचकशब्देषु विसर्गस्य प्राप्तिः तु भवेत् संस्कृतव्याकरणानुसारं परं लोपः मन्येत, यथा सन्धि-नियम-बलेन स्थानेस्थाने अवलोक्यते। 'रामलालः गच्छति' अथवा 'रामलालो गच्छति' अस्मिन् स्थाने 'विसर्गादर्शनम्' सूत्र-बलेन 'रामलाल गच्छति' कथ्येत। 'विसर्गादर्शनम्' सूत्रं एतादृशं अधिकारसूत्रं व्यापकसूत्रं वा मन्येत यत् सर्वत्र सर्वासु दशासु वा लगेत्।, अनेन कः लाभः भविष्यति? लाभः तु अयं भविष्यति यत् नामानि व्यक्तिस्थान-वाचकानि स्वरूपे स्थास्यन्ति। अयं सुधारः आवश्यकः येन संस्कृतं अन्यभाषावत् भवेत्। अनेन सर्वाः भाषाः विशेषतया प्रान्तीयभाषाः (संस्कृतभ्रंशरूपाः प्रभाविताः वा) संस्कृते विलीनाः भविष्यन्ति। अस्यां दशायां केवल संस्कृतं अवशिष्टं स्थास्यति। तदा संस्कृतस्य राष्ट्रभाषात्वं अन्ताराष्ट्रियभाषात्वं स्वतएव सिद्धम्। संस्कृतं विश्वभाषा भवेत् इदं अस्माकं उद्देश्यम्।

अस्माकं अयं आशयः यत् येन प्रकारेण व्यक्तिस्थानवाचक-संज्ञाः स्वरूपे तिष्ठेयुः तत्सम्बन्धिनियमः निर्मापणीयः। एतेषु विशेषव्यक्तिस्थानवाचकशब्देषु सन्धिः कदापि न कार्यः। समासे अपि अयं नियमः लग्नः तिष्ठेत् येन एतेषु शब्देषु विरूपता न आगच्छेत्। अद्य इदं न क्रियते। फलं इदं भवति यत् व्यक्तेः स्थानस्य वा नाम अपि सुस्पष्टं न भवति, भ्रमः उत्पन्नः ... । अनेन कथं कार्य्यं चलिष्यति? समासेषु तु महान् भ्रमः उत्पद्यते यथा यदि हिन्दी, फारसी, उर्दू, अंगरेजी, अर्बी, इति भाषाणां समासः क्रियेत तदा तत् अनेन प्रकारेण भविष्यति' अर्थात् "हिन्दीफारस्युर्द्वंगरेज्यर्वी भाषाणाम्"। अयं समासः कश्चित् अपि पुरुषः दृष्टिमात्रेण ज्ञातुं न शक्नोति। अस्य समासस्य उच्चारणमपि भवितुं न अर्हति। बालकानां का कथा कश्चित्

विद्वान् अपि इदं सर्वं सहसा ज्ञातुं न शक्नोति, न शुद्धोच्चारणं कर्तुं शक्नोति। अतएव अयं नियमः अवश्यमेव कार्य्यः यत् यत्र विशेषव्यक्तिस्थानवाचकसंज्ञानां समासः क्रियेत तत्र ताः सर्वाः संज्ञाः पृथक् पृथक् तिष्ठन्तु यथा "हिन्दी-फारसी-उर्दू-अंगरेजी-अर्बी भाषाणाम्"। यदि अयं समासः अनेन प्रकारेण लिखितः स्यात् तदा सुबोधः सरलः च भवितुं अर्हति। अन्यः मार्गः न विद्यते संस्कृतभाषायाः कल्याणाय।

इदं एव मतं अस्ति बहूनां विदुषां येषु महाविद्वान् प० श्रीपाद श्रीमोदर सातवलेकरमहोदयः अग्रगण्यः अस्ति। एवमेव यदि विशेषपुरुषाणां विषये कश्चित् समासः कृतः स्यात् यथा माननीय-आत्माराम-आनन्दस्वरूप-ईश्वरी-प्रसादजनानाम् तदा इदं सर्वं समासे "माननीयात्मारामानन्दस्वरूपेश्वरीप्रसाद—जनानाम्" भविष्यति। अस्य समासस्य पठनमात्रेण कश्चित् अपि पुरुषः इदं ज्ञातुं न शक्नोति यत् कानि कानि नामानि सन्ति। अबाधरूपेण शुद्धोच्चारणं अपि अस्य समासस्य कदापि भवितुं न अर्हति। एवमेव यदि विशेषनगरनाम्नां एकः समासः क्रियेत यथा लखनऊ-आगरा-औन्ध-उन्नाव-नगराणाम्। इदं सर्वं समासे भविष्यति "लखनयागरौन्धोन्नावनगराणाम्" भविष्यति। अहं विचारयामि यत् अनेन समासपठनेन कश्चित् अपि सरलतया ज्ञातुं न शक्नोति यत् अत्र लखनऊ, आगरा, औन्ध, उन्नाव नगराणाम् उल्लेखनं विद्यते। अतएव एतादृशानां समासानां कः लाभः। अनेन तु अस्माकं संस्कृतभाषा व्यर्थं एव अपकीर्तिं प्राप्नोति, अबोधा कठिना च कथ्यते।

व्याख्या—अत्र त्रीणि उदाहरणानि दत्तानि अस्माभिः। तेषां विषये विचारः क्रियते। प्रथमं उदाहरणं विशेषभाषाणां विषये विद्यते। 'हिन्दी' एकस्याः विशेषभाषाया नाम अस्ति

एवमेव 'फारसी' ' उर्दू ' 'अंगरेजी' तथा 'अर्बी' अन्यासां विशेष-भाषाणां नाम अस्ति। एताः सर्वाः विशेषनामवाचक-संज्ञाः, न तु जातिवाचकसंज्ञाः। वस्तुतः विशेष-नामानि अव्ययरूपाणि भवन्ति। संसारस्य अन्यासु भाषासु विशेषनामवाचकसंज्ञाः ( विशेषव्यक्तिवाचकसंज्ञाः, विशेष-स्थानवाचकसंज्ञाः अर्थात् विशेषनामवाचकसंज्ञाः स्युः, यथा रामकृष्ण, आगरा, हिन्दी इत्यादयः क्रमानुसारम् ) विकारं विरूपतां वा न प्राप्नुवन्ति। ताः संज्ञाः सर्वाः सरलाः अपि भवन्ति। समासः तु प्रायः तासु अपि क्रियते, परं न एतादृशः येन काठिन्यं आगच्छेत्। तासु सर्वासु भाषासु विशेषनाम-वाचकसंज्ञाः पृथक् पृथक् सन्तिष्ठन्ते। तासां सम्मेलनं समसनं, संक्षेपः वा एतादृशः न जायते, येन तासां पठनपाठनं उच्चारणं वा न भवेत्। अस्मिन् पुस्तके एतद्वधि अन्यस्याः भाषायाः उदाहरणं न दत्तं अस्माभिः परं सुस्पष्टीकरणाय इदानीं दीयते।

हिन्द्यां कथयिष्यते—

"हिन्दी— फारसी— उर्दू— अंगरेजी— अर्बी भाषाओंको मैंने पढ़ा"

आंग्लभाषायां इदं कथयिष्यते—

" Hindi, Persian, Urdu, English, Arabic languages read by me "

हिन्दीभाषायां एवमेव आंग्लभाषायां अपि समासः विद्यते अर्थात् समसनं क्रियते। हिन्द्यां अयं समासः अस्ति—

"हिन्दी—फारसी—उर्दू—अंगरेजी—अर्बी भाषाओं" एवमेव आंग्लभाषायां अपि अयं समासः अस्ति—

" Hindi, Persian, Urdu, English, Arabic, languages "

हिन्द्यां आंग्लभाषायां तथा इमौ द्वौ समासौ स्तः। अस्य प्रमाणं इदं अस्ति यत् शब्दानां अन्ते 'भाषाओं' तथा 'Languages' पदानि बहुवचने विद्यन्ते। अत्र विविधपदानां समसनं कृतं अस्ति, परं हिन्द्यां एवमेव आंग्लभाषायां तथा अन्यासु भाषासु समासे पदानि पृथक् पृथक् तिष्ठन्ति येन सारल्यं जायते। समासचिह्नानि अपि अन्यासु भाषासु प्राप्यन्ते यथा संस्कृतभाषायां समासेषु प्राप्यन्ते। सर्वासु अन्यासु भाषासु शब्दाः प्रातिपदिकरूपेषु तिष्ठन्ति, परं संस्कृते विभक्तयः आवश्यकाः येन शब्दाः पदवाच्याः स्युः। समासे विविधशब्दाः प्रातिपदिकरूपत्वेन तिष्ठन्ति, अनन्तरं विभक्तयः दीयन्ते। एतद्वधि तु कापि हानिः नास्ति। प्रातिपदिकेषु सन्धिकरणे सर्वासु दशासु अर्थात् समासे सन्धिं करिष्यते चेत् तदा वर्णनातीतं काठिन्यं आगमिष्यति, उच्चारणं अपि न भविष्यति तथा शब्दानां शुद्धरूपं अपि क्वचित् क्वचित् स्पष्टं न भविष्यति। अवलोक्यताम्। हिन्दी-फारसी-उर्दू-अंगरेजी-अरबी शब्दानां समासः कदापि पठने आगन्तुं न शक्नोति। कश्चित् अपि पुरुषः तस्य उच्चारणं न कर्त्तुं शक्नोति, न ज्ञातुं शक्नोति यत् कियतां शब्दानां समासे समसनं क्रियते। संस्कृतभाषायां एतेषां शब्दानां समासः अयं भविष्यति—

"हिन्दीफारस्युर्द्वगेरज्यर्वीभाषाणाम्"

कश्चित् अपि पुरुषः पण्डितः बालकः वा अस्य समासस्य उच्चारणं कर्त्तुं न शक्नोति। अयं समासः स्वयमेव एकः जटिलः प्रश्नः जायते।

अन्यौ द्वौ समासौ अपि पठने उच्चारणे च न आगच्छतः। अस्यां अवस्थायां द्वौ नियमौ कार्य्यौ। तौ इमौ स्तः—

द्वौ नियमौ।

(१) विशेषनामवाचकसंज्ञाः यथासाध्यं स्वरूपे तिष्ठन्तु। यथा 'रामलाल' एकस्य विशेष-पुरुषस्य नाम विद्यते। इदं सत्यं अस्ति यत् 'रामलाल' कस्यचित् अपि पुरुषस्य नाम भवितुं अर्हति, परं अस्यां अवस्थायां अपि तत् नाम विशेषपुरुषस्य भविष्यति। अस्माकं निवेदनस्य अयं आशयः यत् 'रामलाल' नाम जातिवाचकसंज्ञा भवितुं न अर्हति, न कदापि भविष्यति। 'मनुष्य' शब्दः जातिवाचकः भवितुं अर्हति। मनुष्याणां एका जाति विद्यते। मनुष्यजातेः कश्चित् अपि सदस्यः 'मनुष्यः' इति शब्देन कथयितुं शक्यते। विशेषपुरुषस्य यस्य 'रामलाल' इति नाम भवेत् तस्य द्विवचनं बहुवचनं भवितुं न अर्हति। इदं विशेषस्थानवाचकसंज्ञानां विषये अपि सत्यं जायते यथा 'आगरा, लखनऊ, उन्नाव, इत्यादयः' एवमेव 'हिन्दीभाषा, गुजरातीभाषा, आंग्लभाषा इत्यादय'। विशेषनामवाचकसंज्ञासु विशेषस्थानवाचकसंज्ञाः गणिताः भवन्ति, एवमेव 'आंग्लभाषा' इत्यादि शब्दाः। अतएव इदं सर्वं सामान्यतः 'विशेषनामवाचकसंज्ञा' इति नाम्नः कथयिष्यते विशेषपुरुषः, विशेषस्थान, विशेषभाषेत्यादिकं वा किं न भवेत्। इदं निवेदितं अस्माभिः यत् विशेषनामवाचकसंज्ञानां केवलं एकवचनं भवितुं अर्हति। अतएव सर्वेषु कार्य्येषु विशेषनामवाचकसंज्ञानां केवलं एकवचने एव रूपं देयम्, यथा—

| | एकवचनम् |
|---|---|
| (विशेषपुरुषवाचकसंज्ञा) | रामः |
| | रामम् |
| | रामेण |
| | रामाय |
| | रामात् |
| | रामस्य |
| | रामे |
| (विशेषस्थानवाचकसंज्ञा) | प्रयाग |
| | प्रयागम् |
| | प्रयागेण |
| | प्रयागाय |
| | प्रयागात् |
| | प्रयागस्य |
| | प्रयागे |
| (विशेषभाषादिवाचकसंज्ञा) | हिन्दी |
| | हिन्दीम् |
| | हिन्द्या |
| | हिन्द्यै |
| | हिन्द्याः |
| | हिन्द्याः |
| | हिन्द्याम् |

सूचना — विशेषनामवाचकसंज्ञानां द्विवचनं बहुवचनं भवितु न अर्हति, अत एव कदापि न देयम्। इदं अपि विचारणीयं यत् वयं द्विवचनस्य आवश्यकतां न अनुभवाम। अस्मिन् विषये पूर्वं सुस्पष्टतया निवेदितं अस्माभिः। अनेन संस्कृतव्याकरणे

यथेच्छं सारल्यं आगमिष्यति। अद्य व्याकरणे 'राम' 'कृष्ण' इत्यादिशब्दानां ( विशेषनामवाचकसंज्ञानाम् ) सर्वासु विभक्तिषु सर्वाणि रूपाणि दीयन्ते। इदं सर्वं व्यर्थं एव। अनेन सह इदं अपि आवश्यकं अस्ति यत् सर्वासां संज्ञानां विभाजनं क्रियेत यथा इमाः विशेषनामवाचकसंज्ञाः, इमाः ज्ञातिवाचकसंज्ञाः इमाः भाववाचकसंज्ञाः इत्यादयः। अनेन कार्य्येण व्याकरणे सारल्यं सुबोधत्वं च आगमिष्यति।

(२) द्वितीयः नियमः अयं कार्य्यः यत् विशेषनामवाचकसंज्ञानां यत्र समासः क्रियेत तत्र ताः विशेषनामवाचकसंज्ञाः स्वरूपे तिष्ठन्तु। तासु सन्धिः न क्रियेत। इदं संशोधनं नितान्तं आवश्यकं अस्ति। एतेषां नाम्नां समासः अनेन प्रकारेण तिष्ठेत्।

"हिन्दी-फारसी-उर्दू-अंगरेजी-अर्बी-भाषाणाम्" सन्धिकरणे घोरानर्थः जायते। सन्धिकार्य्यं बुद्धिपूर्वकं करणीयं एव। सन्धिः भाषासारल्याय सुबोधाय च विधते, नतु भाषासन्धेः कृते, येन भाषात्वं नष्टं स्यात्। अद्य बुद्धिपूर्वकं तथा सम्यक् विचार्य्य कार्य्यं न भवति। अद्य यत् किञ्चित् व्याकरणेषु विद्यते तत्सर्वं एव ऋषि-मुनि-प्रणीतं मन्यते। इदं न विचार्य्यते विद्वद्भिः यत् अद्य तेषां व्याकरणग्रन्थानां बहुभागः अनावश्यकः भवितुं अर्हति। वार्तिकेषु अनर्गलवार्ताः भवितुं अर्हन्ति याः प्राचीनसमये उपयोगिन्यः स्युः, परं अद्य तासां कश्चित् अपि लाभः उपयोगः वा न अस्ति।

एकं अन्यं अपि कार्य्यं भवितुं अर्हति। यद्यपि वर्तमानव्याकरणनियमानुसारं सन्धिः समासे नित्यः भवति, तथापि भाषाहिताय नियमशैथिल्यं भवितु अर्हति। न्यूनातिन्यूनं समासे सन्धिः वैकल्पिकः स्यात् यत्र विशेषनामवाचकसंज्ञाः प्रातिपदिकरूपत्वेन तिष्ठन्तु। अनेन भाषासौविध्यं सारल्यं च आगमिष्यति। अस्माक

निश्चितं मतं तु इदं अस्ति यत् यत्र समासे विशेषनामसंज्ञानां समसनं स्यात् तत्र नियमरूपेण सन्धिः न भवेत् अर्थात् सन्धिः कदापि न क्रियेत। अनेन यथेच्छ सारल्यं आयास्यति, तथा संस्कृतभाषासुबोधत्वात् शीघ्रातिशीघ्रं स्वत एव राष्ट्रभाषा भविष्यति। प्रचलितरूपे तु संस्कृतं कदापि राष्ट्रभाषा भवितुं न अर्हति दुर्बोधत्वात् काठिन्यकारणात्। अत एव समासे पूर्वोक्तसंशोधनं नितान्तं आवश्यकम्।

समासः।

समासः पञ्चधा। स च विशेषसंज्ञाभिः रहितः केवलसमासः प्रथमः। प्रायेण पूर्वपदार्थप्रधानः अव्ययीभावः द्वितीयः। प्रायेण उत्तरपदार्थप्रधानः तत्पुरुषः तृतीयः। अस्य भेदः कर्मधारयः, तस्यभेदः द्विगुः। प्रायेण अन्यपदार्थप्रधानः बहुव्रीहिः चतुर्थः। प्रायेण उभयपदार्थप्रधानः द्वन्द्वः पञ्चमः।

(१) तत्र प्रथमः केवलसमासः अनेन सूत्रेण भवति,

" सहसुपा " २।१।१ ( सूत्रसंख्या ९६५ )

व्याख्या— सुबन्तः सुबन्तेन सह वा समस्यते।

उदाहरणम्—भूतपूर्वः। अस्य लौकिकविग्रहः पूर्वं भूतः इति।

(२) अव्ययीभावसमासः अनेन सूत्रेण भवति।

" अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु " २।१।६ ( सू. सं. ९६८ )

व्याख्या–विभक्त्यर्थादिषु वर्तमानं अव्ययं सुबन्तेन सह नित्यं समस्यते सः अव्ययीभावसंज्ञः स्यात्। उदाहरणम्–अधिहरि।

(३) तत्पुरुषसमासः अनेन सूत्रेण भवति।

" द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः " २।१।२४

( सू. सं. ९८५ )

व्याख्या—द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह वा समस्यते सः तत्पुरुषसंज्ञः स्यात्।

उदाहरणम्— कृष्णश्रितः इत्यादि। कृष्णं श्रितः इति विग्रहः। अस्मिन् समासे सर्वैः कारकैः सह सुबन्तस्य समासः भवति।

(४) कर्मधारयसमासः अनेन सूत्रेण भवति।

" विशेषणं विशेष्येण बहुलम् " २।१।५७ (सू. सं. १००७)

व्याख्या— विशेषणं समानाधिकरणेन विशेष्येण बहुलं समस्यते।

उदाहरणम्—कृष्णसर्पः, कृष्णः च असौ सर्पः इति विग्रहः।

(५) द्विगुसमासः अनेन सूत्रेण भवति।

" तद्धितार्थोत्तरपदसमाहारे च " २।१५।१ (सू. सं. ९९८)

व्याख्या— तद्धितार्थविषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्संख्ये समस्यते।

उदाहरणम्—पञ्चगवम्, पञ्चानां गवां समाहारः इति विग्रहः। अस्मिन् समासे नपुंसकं एकवचनान्तं च तिष्ठति।

(६) बहुव्रीहिसमासः अनेन सूत्रेण भवति।

" अनेकमन्यपदार्थे " १।१।१४ (सू. सं. १०३५)

व्याख्या— अनेकं प्रथमान्तं अन्य पदस्य अर्थे वर्त्तमानं वा समस्यते स, बहुव्रीहिसंज्ञः स्यात्।

उदाहरणम्— पीताम्बरः, पीतं अम्बरं यस्य इति विग्रहः।

(७) द्वन्द्वसमासः अनेन सूत्रेण भवति।

" चार्थे द्वन्द्वः " २।२।२९ (सू. सं. १०५५)

व्याख्या— अनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते सः द्वन्द्वसंज्ञः स्यात्।

चार्थः चतुर्विधः भवति-समुच्चयः, अन्वाचयः, इतरेतरयोगः, समाहारः। तत्र समुच्चये अन्वाचये च असामर्थ्यात् समासः न भवति। इतरेतरयोगे समाहारे च समासः भवति।

तत्र इतरेतरयोगस्य उदाहरणम्— शिवकेशवौ, शिवः च केशवः च इति विग्रहः।

समाहारस्य उदाहरणम्— पाणिपादम्, पाण्योः पादयोः च समाहारः इति विग्रहः।

समाहारे नपुंसकं एकवचनान्तं च तिष्ठति।

इत्थंप्रकाराः समासाः भवन्ति। एतेषां विषये विचारणीयं विद्वद्भिः यत् कियत्समासाः आवश्यकाः, कियत्समासाः त्याज्याः।

परं समासः इच्छाधीनः विषयः। तत्क्रियेत न वा। अत एव क्लिष्टसमासाः न कार्य्याः। ये समासाः सरलाः स्युः केवलं ते व्यवहरणीयाः।

संस्कृतव्याकरणानुसारं समासकरणे प्रातिपदिकेषु पदत्वं आगच्छति अर्थात् समासाः पदानि जायन्ते। पदेषु व्याकरणानुसारं एव सन्धिः नित्यः भवति। अत एव समासविषये इदं संशोधनं आवश्यकं यत् अधिकादधिकं द्वित्रिशब्दानां समासः भवेत्। यद्यपि द्वन्द्वसमासे बहुव्रीहिसमासे द्वित्रिशब्देभ्यः अधिकशब्दानां अपि समसनं भवितुं अर्हति, परं इच्छाधीनत्वात् तत्र अपि क्रियेत न वा। अस्यां दशायां अयं नियमः कार्य्यः यत् द्वित्रिशब्दानां अधिकादधिकं समासः क्रियेत। द्वितीयः नियमः अयं कार्यः यत् विशेषनामवाचकसंज्ञानां यत्र समासे समसनं स्यात् तत्र सन्धिः कदापि न क्रियेत। पूर्वं उदाहरणानि दत्तानि अस्माभिः येन सुस्पष्टं भवितुं अर्हति यत् तत्र सन्धिः घोरानर्थकरः। समासः पठने न आगच्छति न तस्य शुद्धोच्चारणं भवितुं अर्हति। इत्थंदेशेन समा-

सेन कः लाभः। लाभस्थाने हानिः सम्भवति। यत्र विशेषनाम-वाचकसंज्ञानां समसनं स्यात् तत्र समासे सन्धिः वैकल्पिकः तिष्ठेत्। अनेन महान् लाभः भवितुं अर्हति।

अत्र अस्माकं निवेदनस्य सुस्पष्टीकरणार्थं एकं उदाहरणं भूयः दीयते। पूर्वं कथितं अस्माभिः यत् ' माननीय, आत्माराम, आनन्द-स्वरूप, ईश्वरीप्रसाद जनानां ' शब्दानां समसनं क्रियेत चेत् तदा एतेषां इदं रूपं भविष्यति।

" माननीयात्मारामानन्दस्वरूपेश्वरीप्रसादजनानाम् "

एवमेव यदि विशेषस्थानवाचकसंज्ञानां समासः क्रियेत यथा " लखनऊ, आगरा, औन्ध, उन्नावनगराणाम् " तदा इदं रूपं भविष्यति।

" लखनवागरौन्धोन्नावनगराणाम् "

व्याख्या—प्रथमसमासे पुरुषनामानि पठने न आगच्छन्ति। इदं प्रतीयते यत् " माननीयात्मा+रामानन्द+स्वरूपेश्वरी+प्रसाद-जनानाम् " समसनं क्रियते। इमानि नामानि विविधविविध-प्रकारैः पठने आगन्तुं शक्नुवन्ति। कदाचित् इमानि नामानि पठने उच्चारणे वा आगच्छन्तु, परं " लखनऊ, आगरा, औन्ध, उन्नावनगराणाम् " नामानि तु कदापि पठने, उच्चारणे, अव-बोधने वा न आगच्छन्ति। कश्चिद् अपि पुरुषः इदं तथ्यं ज्ञातुं शक्नोति। अत एव अयं नियमः अवश्यमेव कार्य्यः यत् यत्र समासे विशेषनामवाचकसंज्ञानां समसनं स्यात् तत्र नियम-रूपेण सन्धिः न क्रियेत अर्थात् सन्धिः कदापि न क्रियेत। यत्र सन्धिः न क्रियते तत्र समासः त्रित्रिशब्देभ्यः अधिकशब्दानां अपि भवितुं अर्हति। अन्यस्थलेषु यत्र सन्धिः क्रियेत तत्र केवलं त्रित्रिशब्दानां समासः भवेत्। अयं नियमः भवतु।

अहं तु अत्र महाविदुषः पं. समापति उपाध्याय, अध्यक्ष। बिरलासंस्कृतमहाविद्यालय, काशी, महोदयस्य कथनस्य अक्षरशः समर्थनं करोमि। अस्य पुस्तकस्य प्रथमाध्याये तस्य महोदयस्य मतं दत्तं अस्ति। स कथयति।

"......बहुव्रीहिसमासः एवमेव द्वन्द्वसमासः
अधिकादधिकं द्वित्रिशब्दनां भवेत्।"

एवमेव महाविदुषः पं. श्रीपाद दामोदर सातवलेकर, अध्यक्ष, स्वाध्यायमण्डल, महोदयस्य कथनस्य समर्थनं क्रियते अस्माभिः। स विद्वान् स्वपक्षे यस्य उद्धरणं अस्य पुस्तकस्य प्रथमाध्याये दत्तं अस्ति कथयति।

समासविषये "पदच्छेदपूर्वकं लेखने" न काठिन्यं भविष्यति। यथा—

'पर्वत-शिखर-स्थित-कुसुम-संचयः' इति तु स्पष्टतरं भवति लेखनम्। द्वित्रिपदयुक्ताः समासाः भवेयुः, तदधिकपदयुताः निषेद्धव्याः सारल्येच्छुभिः।

ईदृशैः अन्यैः महाविद्वद्भिः अस्मार्क मतस्य समर्थनं क्रियते। अत एव वयं सानुरोधं निवेदयामः यत् समासविषये पूर्वोक्तानि सर्वाणि संशोधनानि आवश्यकानि। अनेन संस्कृतभाषायां वर्णनातीतं सारल्यं आगमिष्यति, येन संस्कृतं पञ्चवर्षेषु भूयः जनभाषा भूत्वा भारतस्य राष्ट्रभाषा भविष्यति, तथा पञ्चविंशतिवर्षेषु विश्वभाषा पूर्ववत्। एवमस्तु।

# अध्यायः ५

## विसर्गादर्शनम् ।

### ( भविष्यवाणी )

व्याख्या— लोके विसर्गस्य अदर्शनं स्यात्। अस्मिन् विषये अस्माकं निश्चितं मतं अस्ति यत् व्याकरणानुसारं विसर्गस्य प्राप्तिः तु भवेत् परं सूत्रबलेन लोपः मन्येत। अधिकारसूत्रं इदम्। सर्वत्र सर्वासु दशासु एव, अस्य सूत्रस्य अधिकारः तिष्ठेत्। अनेन अयं लाभः भविष्यति यत् संस्कृतं सर्वकालपर्यन्तं स्थास्यति। "संस्कृतम्" पत्रस्य शब्देषु--

"यावत् भारतवर्षं स्यात् यावत् विन्ध्यहिमाचलौ।
यावत् गङ्गा च गोदा च तावत् एव हि संस्कृतम्॥"

पूर्वं स्थाने स्थाने तथा वारं वारं निवेदितं अस्माभिः यत् प्रचलितरूपे संस्कृतं स्थातुं न शक्नोति। संस्कृतं 'मृतप्रायं' इति कथ्यते जनैः। शनैः शनैः तस्य लोपः भवति। वयं कामयामहे ईश्वरं प्रार्थयामहे यत् इदं माभूत्, परं एकं दिनं ईदृशं भवितुं अर्हति यत् संस्कृतभाषायाः आत्यन्तिकः ह्रासः स्यात्। अस्यां दशायां लोकस्य महती हानिः सम्पत्स्यते। संस्कृतसाहित्ये, तस्य अध्यात्मवादे सर्वोपरि स्वतः प्रमाणवेदज्ञानविज्ञाने यत् यत् विद्यते, तेन एव विश्वत्राणं भवितुं अर्हति, तेन एव चिरसौख्यं, परां शान्तिं विश्वे अस्मिन् भवितुं अर्हति। अस्माकं तु निश्चितं मतं अस्ति यत् संस्कृतसाहित्यनाशे विशेषतया वेदज्ञाननाशे लोकनाशः अवश्यम्भावी।

स्थाने स्थाने कथितं अस्माभि यत् वेद अपौरुषेय', ईश्वरस्य सम्पूर्णनित्यज्ञान यत् प्रत्येकसर्गादौ देवानां द्वारा लोककल्याणाय देववाण्यां वेदवाण्यां वा दीयते। यदा यदा सृष्टिः भवति तदा तदा इद ज्ञान वेदस्वरूपे दीयते। इदं सर्व मनुष्यबुद्धौ अपि आगच्छाति। यदा जीवसृष्टे विशेषतया मानवसृष्टे शारीरिकसुखाय पृथ्वी-जल-वायु-अग्नि-आकाश-सूर्यचन्द्रादिकं दीयते निर्मीयते वा कयाचित् महत्या ईश्वरनामकया शक्त्या तदा किं तया शक्त्या मानवस्य जीवसृष्टे वा आत्मिकोन्नतये मानसिकविकासाय वा अध्यात्मज्ञान न दास्यते।

यदि ईश्वरनाम्नी काचिद शक्तिः अस्ति या लोकव्यवस्थया निखिलब्रह्माण्ड-निर्माणचातुर्येण वा सहजतया अनुमीयते, यस्याः शक्ते अदृष्टहस्त. चित्र-वैचित्र्य-सूक्ष्मातिसूक्ष्म-रचनासु अवलोक्यते यस्याः रहस्य उद्घाटने न आगच्छाति, तदा इदं अपि कथनीय अनेन सर्वेण यत् सा शक्ति. वेदज्ञानविज्ञानदानाय अपि समर्था। आत्म-परमात्म-प्रकृतिज्ञानविज्ञानविहीन जीवन किम्? ईदृशः ज्ञानविज्ञानविहीन नरः तु पशु भवति, नहि नहि पशुत. निम्न भवति अस्माक मतानुसारम्। कथ्यते साहित्याचार्य-राजर्षिभर्तृहरिमहोदये,

साहित्यसंगीत-कलाविहीनः।
साक्षात्पशु पुच्छविषाणहीनः॥

ईदृशी काचित् ईश्वरनाम्नी शक्ति स्वनिर्मितवस्तुना दीर्घतरा मन्तव्या। ब्रह्माण्ड अनन्तं, लोकरचना अनन्ता, सूर्यचन्द्रादौ लोका अनन्ता। अत एव तेभ्यः सर्वेभ्यः लोकेभ्य काचित् दीर्घतरा अनन्ताशक्ति यतितव्या, यस्या नाम 'ईश्वर'।

'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' ॥२४॥
'तत्र निरतिशयं सर्वज्ञबीजम्' ॥२५॥
'स एष पूर्वेषामपिगुरुः कालेनानवच्छेदात्' ॥२६॥
(पात. यो. सू. समाधिपादः, २४-२६)

वेदभगवान् आदिशति यत्—

एतावानस्य महिमातो ज्यायाँश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥
(वा० य० ३१।३)

यद्यपि ईश्वरस्य परिमाणः न विद्यते, तथापि उपमारूपेण इदं कथ्यते यत् तस्य ईश्वरस्य चतुर्थांशे सृष्टेः सर्वे लोकलोकान्तराः विद्यन्ते। निखिलब्रह्माण्डं तस्य ईश्वरस्य चतुर्थांशमात्रम्। तस्याः शक्तेः त्रिभागाः अनन्ताः, सर्वस्याः रचनायाः बहिर्मोक्षरूपेण विद्यन्ते। एतादृश्याः शक्तेः महत्ता कल्पनातीता। परं इयं शक्तिः सर्वज्ञतायाः अपि बीजम्। तस्याः ज्ञानं अपि अनन्तं सम्पूर्णम्। तस्य ज्ञानस्य अंशमात्रं वेदः यः लोकहिताय सर्गे सर्गे दीयते। तज्ज्ञानं सत्यं सम्पूर्णं अपौरुषेयं सर्वथा कल्याणकरम्। तज्ज्ञानस्य कलेवरं वेदभाषा देवभाषा वा वेदे लोके च संस्कृतम्। वेदभाषातः विश्वस्य सर्वाः भाषाः उत्पन्नाः यथा लौकिकसंस्कृतं अपि। अद्य प्रायः सर्वे प्राच्याः पाश्चात्याः विद्वांसः अस्मिन् विषये एकमताः सन्ति। संस्कृत-विषये अहं कतिपय-विदुषां मतानि ददामि येन तस्य महत्त्वं सुस्पष्टं स्यात् तथा इदं अपि यत् वेदभाषातः सर्वाः भाषाः निस्सृताः—

## नेतॄणां विदुषां च मतानि।

(१) माननीय श्री जवाहरलालनेहरू, भारतप्रधानमन्त्रिणः वदन्ति—

"अस्माकं अयं विश्वासः यत् कस्यचित् अपि देशस्य भाषा-चरित्रे अधिकं प्रकाशं आरोपयति । या भाषा शक्तिशालिनी, प्रेरणापूर्णा तस्याः भाषिणः अपि तादृशाः भविष्यन्ति । एतद्वि-परीता या भाषा जटिला, अनाकर्षिका, दुरवबोधा च तद्भाषिणः अपि तादृशाः एव भविष्यन्ति । अस्मद्विचारे यस्यां भाषायां स्वभावः न अभिव्यज्यते तद्भाषिणः अपि स्वच्छाः न भविष्यन्ति एतत्फलस्वरूप एतादृशा जनाः यत्कार्यं करिष्यन्ति तत् अस्त-व्यस्तं एव द्रक्ष्यते ।

देशभाषायां गुणद्वय अत्यावश्यकम् । प्रथम गुणः यत् भाषायाः आधारः प्राचीना संस्कृतिः स्यात्, द्वितीयः च अयं यत् सा भाषा समयेन सह परिवर्त्तमानानां, व्यापकानां, वातावरणानां अनु-कूलतां साध्येत, सिद्ध्येत् च निर्बाधा । भाषायां बाह्यशब्दानां पाचनशक्त्या भवितव्य एव ।

यदि मत्तः पृष्ट स्यात् यत् भारतस्य सर्वतः महीयान् निधिः कः ? तर्हि अहं वदिष्यामि संस्कृतभाषा तस्याः साहित्यं च । संस्कृत-भाषा अस्य देशस्य एका सजीवपरम्परा । अहं कामयिष्ये यत् कतिपयजनाः संस्कृतविद्वांसः भवेयु, संस्कृतसाहित्यं अन्विष्य ततः उत्तमवस्तूनि आविष्कुर्युः, प्रकाशयेयुः च ते ।

अति खिद्यामहे वयं यत् संस्कृतस्य गुणगाथां गायन्तः अपि तस्य मौखिकीं एव सेवां कुर्मः । वस्तुतः तु वयं संस्कृतस्य दिशि ध्यानं एव न दद्मः ।"

(२) हिज्एक्सेलेन्सी माननीय माधव श्रीहरि अणे विहार प्रान्तगवर्नराः वदन्ति–

"नवोदितस्वतन्त्रभारतीय–राज्याय ज्ञानविज्ञानयोः महती आवश्यकता । प्राचीनसंस्कृतभाषाग्रन्थेषु आधुनिकविज्ञानस्य

अपि ग्रन्थाः विद्यन्ते। ज्योतिःशास्त्रं अपि एकं विज्ञानं एव। अस्माकं प्राचीनविज्ञानग्रन्थाः संस्कृतभाषायां विनिबद्धाः अत एव तेषां ज्ञानाय संस्कृतभाषायाः प्रचारस्य, राष्ट्रभाषात्वस्य च आवश्यकता वरीवर्त्ति एव। प्रयत्नेन किमपि असाध्यं न अस्ति। स्वराज्यप्राप्तिः प्रारम्भे केन अनुमिता सा अभूत् एव। एवमेव संस्कृतस्य राष्ट्रभाषात्वं अपि सम्भवं एव। जनानां यादृशी समीहा भविष्यति, तेषां राज्यं अपि तादृशं एव कार्यं करिष्यति। अस्माकं अपि एतत् अभिमतं यत् संस्कृतभाषा संरक्षणीया। यतः भारतीया संस्कृतिः तदायत्ता एव वर्त्तते। सनातनधर्मस्य स्तम्भाः अतिसुदृढाः तान् उत्पाटयितुं न कश्चित् अपि शक्तः। अवश्यं अधुना किमपि चाञ्चल्यं दृश्यते परं इदं न चिरस्थायि। इदं राज्यं न नेहरूराज्यं, न पटेलराज्यं किन्तु प्रजाराज्यं इति न विस्मरणीयम्, इति।"

(२) हिज् एक्सेलेन्सी माननीय डा० कैलासनाथ काटजू वंगगवर्नराः वदन्ति—

" अयं सन्तोषविषयः यत् सार्द्धैकवत्सरात् देशोन्नत्यै यतमानानां जनानां चेतस्सु अस्याः प्राचीनभाषायाः कृते सानुरागः परिचयः समेधते। अहं भाषायाः प्रश्नं साम्प्रदायिकदृष्ट्या न पश्यामि। अस्माकं विशाला भारतीया संस्कृतिः मुख्यरूपेण संस्कृतभाषायां विकसिता अभूत्। प्रान्तीयभाषाणां मूलाधारः संस्कृतम्। अनेन एव ताः पोष्यन्ते। कोटिकोटि-मानवानां दैनिकचर्यायां एतस्याः नियन्त्रणं वर्त्तते। संस्कृतं देशभाषात्वेन अस्मत्समक्षं एति अंग्रेजी गच्छति, तया गन्तव्यं एव तस्य स्थाने संस्कृतं कथं न गृहीतं स्यात्। संस्कृतं साहित्याध्यात्मधर्मभाषा एव नास्ति प्रत्युत तत्कलाविज्ञानगणितायुर्वेदज्योतिषरसायनभाषा अपि

एतच्छब्दकोषस्य तुलनां संसारे काचित् अपि भाषा न कर्तुं शक्नोति। असंख्यशताब्दीः यावत् या भाषा अस्मद्राष्ट्रस्य भारं उवाह सा परित्यज्यते। स्वतन्त्रभारतस्य राष्ट्रभाषया संस्कृत-भाषया एव भवितव्यम्।

अस्मिन् समये राष्ट्रभाषया प्रश्न. गम्भीरविवादग्रस्तः वर्त्तते यदि दशवर्षपर्यन्तं स्कूलकालेजेषु अनिवार्यरूपेण संस्कृतस्य अध्ययनं आरब्धं स्यात् तर्हि स्वत. एव निर्णयः भवेत् यत् भारतस्य राष्ट्र-भाषा का भाषा भवेत्। अस्माकं विश्वासः अस्ति यत् एतत्समया-भ्यन्तरे राष्ट्रभाषात्वप्रश्नः सरल. सम्पत्स्यते। समस्तप्रान्तीयभाषाणां जननी संस्कृतभाषा। प्रगतिविरोधिनां अज्ञानिनां चिन्हं इति विचारधारायाः न अहं पक्षपाती। यदि अस्माकं एतज्जातीयसम्पत्ते' प्रेमप्रगतेः विरोधि अज्ञान तथा तर्हि अस्यां दशायां सुखं अनु-भवामि, इति।"

( ४ ) माननीयराजर्षिश्रीपुरुषोत्तमदास टंडन, अध्यक्ष यु० प्रा० धारासभा, महोदयाः वदन्ति—

" मया संस्कृत सम्यक् न अधीतं अतः लज्जित' अस्मि। संस्कृतसाहित्यमहासागरे कृत चञ्चुप्रवेश, परं तेन संस्कृतभाषण-योग्यता न अस्ति। संस्कृतस्य रामायणमहाभारतादिग्रन्थानां तुल-नायां संसारस्य कस्यांचिदपि भाषायां ग्रन्थाः न सन्ति। अद्यापि गतेषु अपि अंग्रेजेषु तेषां मानसपुत्रा अद्य अपि भारते वर्तन्ते इति खेदविषयः। अहं कामये भारते सा एवं राजनीतिः प्रचलिता स्यात् या संस्कृतग्रन्थेषु भारतीयपुरातनराजनीतिविशारदैः लिखिता, येषां चिरं भारते प्रभावः अतिष्ठत्। मम इयं सम्मति यत् संस्कृतस्य राजनीतिक्षेत्रे प्रवेशोऽस्तु। अहं इच्छामि भारतीय राजदूतैः सह संस्कृतविद्वांस' अपि गत्वा स्वसंस्कृतिं विदेशेषु

प्रचारयेयुः। भारतीयं विधानं कृषकभाषायां लिखितं स्यात् इति न अहं वाञ्छामि, इति।"

(५) पण्डितराजदेवनायकाचार्य, प्रधानमन्त्रिण, अखिल-भारतीयसंस्कृतसाहित्यसम्मेलन, महोदयाः वदन्ति—

"भारतीयाः सर्वाः भाषाः संस्कृतात् उत्पन्ना अतः तासु तस्य शब्दाः अनिवार्यरूपेण प्रविष्टाः सन्ति। एतस्मात् कारणात् संस्कृतं अन्तरा न ताः स्थातुं शक्नुवन्ति, न उन्नतिं सम्पादयितुम्। न केवलं आसां भाषाणां उन्नत्यै, संरक्षणाय एव संस्कृतस्य आवश्यकता किन्तु विभिन्नप्रान्तभाषासंस्कृतिसदाचारभावभूषादिभिः विभक्तस्य भारतस्य ऐक्यस्थापनाय अपि। भारतीयतां विना भारत न स्थातुं शक्नोति। यदि भारतस्य स्वरूपावस्थानं भारतीयैः आवश्यकं मन्यते तर्हि संस्कृतभाषायाः राष्ट्रभाषात्वं ऊरीकरणीयं एव, इति।"

(६) म. म. पं. गिरिधरशर्म्मा अध्यक्ष, अ० भा०संस्कृतसाहित्य-सम्मेलन, महोदयाः वदन्ति—

"संस्कृतं सर्वभाषाणां जननी.........

संस्कृतं सर्वभाषाभ्यः पयःपानं कारयित्वा न केवलं तासां वृद्धिं एव आतनुते किन्तु तस्यां प्रजननशक्तिः अपि अस्ति। आश्चर्य्यं इयं मृतभाषा इति उच्यते। आधुनिके विज्ञानमध्याह्ने अनेके विषयाः वर्त्तन्ते येषां संस्कृतं विना ज्ञानं असम्भवम्। एषु अध्यात्मं प्रधानम्। आत्मज्ञानाय संस्कृतं आवश्यकं यतः स्वज्ञानं यदि न तिष्ठेत् तर्हि अवशिष्यते किम्? असंख्या ईश्वर-वादिन्यः जातयः भारते विद्यन्ते परं ईश्वरस्य विश्व, विश्वचर, विश्वातीतरूपे क्वचिद्वर्णनं न आस्ते। किम् इमे सर्वे निरर्थकाः विषयाः दूरीकरणीयाः?

कन्दमूलफलाशिनां ऋषीणां यन्निधेः रक्षणे परमः पुरुषार्थः प्रतिष्ठत् तत्त्यागः करणीय· वर्तमानं चाकचक्यं अवलोक्य किम् ?

संस्कृतभाषासदृशी न काचित् पूर्णा भाषा, न कस्यांचित् तादृशं पूर्णं साहित्यं, न कस्याश्चित् तादृश· प्रभावः, न व्यापकता, अतः संस्कृतभाषया एव भारतस्य राष्ट्रभाषया भवितव्यम्। भारते संस्कृतातिरिक्ता काचित् अपि भाषा राष्ट्रभाषा न भवितु अर्हति। संसारस्य सर्वासु भाषासु साधारणः असाधारणः यावान् ग्रन्थराशिः भविष्यति तत· अधिकः एव अत्र अस्ति।"

(७) हिज् एक्सेलेन्सी माननीय श्री आसफअली, उत्कल प्रान्तगवर्नराः वदन्ति—

"संस्कृतभाषा सर्वभाषाणां जनयित्री भाषा। उर्दूभाषायां अपि बहवः संस्कृतशब्दा· सन्निविष्टा· सन्ति। ज्ञानस्य वृद्धयै तत्पठने सर्वेषां मनोयोग· आवश्यकः। मुसल्मानाः अपि संस्कृतं पठेयु', इति।"

(८) (अ) अफगानिस्तानस्य सुप्रसिद्ध पत्र 'अनीस' सम्पादकः श्री मुहम्मदहाशिममैवन्दवालः मद्रासे १७ तारिखे पत्रकारैः पृष्टः यत् अफगानिस्तानस्य मुसलमाना संस्कृतस्य अनिवार्यतायां किञ्चित् विरोधं न अकुर्वन् ? ते फारस्यरब्योः अध्यापनाय किं बलं न आपु ?। 'अनीस' सम्पादकः उक्तवान् "अरबी सेमिटिकभाषा, वय आर्याः, अत एव संस्कृतभाषायाः अन्तर्गताः अस्माकं भाषा संस्कृतभाषायाः निकटे वर्तते। अस्माकं फारस्या अरब्या च किं प्रयोजनम्? फारसीं अरबीं च कश्चित् अपि अफगान· स्वगृहे अध्येतु शक्नोति, तां एकां भाषां विज्ञाय विविधभाषासदृशीम्।"

(आ) बम्बय्यां भाषमाणः श्री हाशिमसाहबः उक्तवान्—
" अहं भारताफगानिस्तानयोः सांस्कृतिकं सम्बन्धं दृढयितुं आगतः अस्मि । भारताफगानिस्तानयोः निवासिनः आर्य्याः सन्ति । द्वयोः देशयोः प्रधाना भाषा संस्कृतम् । अस्यां अवस्थायां उभयोः देशयोः सम्बन्धेन दृढेन भवितव्यं एव ।"

## (९) संस्कृतं जगतः भाषा न केवलं एशियायाः।

कांगडी-गुरुकुले डा० लुई रेणोः भाषणम्—

पैरिसविश्वविद्यालयस्य भारतीय विद्याभवनप्रधानाचार्यः, प्रख्यातपुरातत्त्वमर्मज्ञः डा० लुई रेणुमहोदयः भारतीय विश्वविद्यालयेषु भाषमाणः क्रमतः विख्यातं कांगडीस्थं गुरुकुलं ह्याय । अनन्तरं अध्यापकानां छात्राणां च एकस्यां सभायां भाषमाणः माननीय डा० लुई रेणुमहोदयः उक्तवान्—

" अहं भारतस्य अनेकेषु विश्वविद्यालयेषु गतः शिक्षास्थानेषु च, परं प्रचलद्राजनीतिविषये निरर्गलं सहजतया संस्कृतेन वार्त्तालापं, वादं विवादं च कुर्वतः क्वचित् अपि न छात्रान् नच अध्यापकान् अवलोकितवान् । यदि भारतागमनसमये एव कश्चित् मह्यं अमुं समाचारं अदास्यत् यत् कांगडीगुरुकुले संस्कृतं इत्थं भाष्यते तर्हि भारते व्यतीतेषु षण्मासेषु सार्द्धैकमासं एतत्कृते अवश्यं अदास्यम् । अत्र छात्रैः अध्यापकैः सह वार्त्तालापं विधाय संस्कृतभाषणयोग्यतां अवर्द्धयिष्यम् । गुरुकुले मम भारतयात्रा समाप्तिं एति । भारते संस्कृतभाषायाः सेवायां मम जीवनस्य श्रेष्ठतमः भागः व्यतीतः । अधुना वक्तुं शक्तः अस्मि यत् अद्य योरोपः भौतिकवादे निमग्नः अस्ति दुर्बलां संस्कृतिं दुर्बलान् विचारान् च आश्रित्य भ्रमितः । आसीन्

समये भारतीयां संस्कृतिं संस्कृतभाषां च एव आदर्शीकृत्य सः आत्मनः त्राणं कर्तुं शक्नोति। अहं स्वमातृविद्यासंस्थानं पैरिस गत्वा युवकान् भारतं आगन्तुं प्रोत्साहयिष्यामि। ते अत्र आगत्य भारतीयां संस्कृतिं अनुशीलयेयुः, हिमालयस्य उपत्यकायां विद्यमाने गुरुकुले स्थित्वा संस्कृतं अभ्यसेयुः। अहं तान् वदिष्यामि यत् गुरुकुले संस्कृतभाषायाः तादृशं एव अद्य अपि सहजं वातावरणं आस्ते यादृशं पुरा पाटलिपुत्रस्य उज्जयिन्याः च वीथिषु आसीत्।

अहं एकं एव दुःखं आदाय भारतात् गच्छामि यत् वयं योरोपीयाः यां संस्कृतभाषां अमरभाषां मत्वा अनुशीलयामः अन्वेषयामः च तां एव भारतीयाः मृतां आचक्षते। भारतस्य समस्तं गौरवं, समस्ता सम्पत्तिः च संस्कृतभाषायां निहिता आस्ते। यः भारतीयः संस्कृतभारतीं न जानाति सः भारतीयः कथं भवितुं अर्हति? भारतीयानां अयं दुर्भाग्यस्य विषयः यत् तेषां शिक्षासचिवः संस्कृतेन अनभिज्ञः वर्त्तते।

भारते राष्ट्रभाषायाः विषये भारतीयाः निरर्थकं भ्रान्तिं उपेताः वर्त्तन्ते। भारतस्य सांस्कृतिकी भाषा संस्कृतम्। संस्कृतभाषा एव भारतस्य राष्ट्रभाषा भवितुं अर्हति। भारतस्य एव किं समस्तेशियायाः अपि सांस्कृतिकी राष्ट्रीया भाषा च संस्कृतं एव भवितुं अर्हति। संस्कृतभाषायां एव जगद्भाषात्वलक्षणानि पूर्णतया सन्निविष्टानि वर्त्तन्ते इति।"

अनेन पठनेन सिद्धं भविष्यति यत् संस्कृतभाषायाः कियत् महत्त्वं विद्यते। न केवलं भारतीयाः अपि तु विदेशीयाः तस्याः भूरिभूरि प्रशंसनं कुर्वन्ति। द्वे वार्त्ते स्पष्टे स्तः। एका वार्त्ता तु

इयं अस्ति यत् संस्कृतं सर्वासां भाषाणां जननी अस्ति। प्रायः सर्वैः विद्वद्भिः इदं मन्यते। द्वितीया वार्त्ता इयं अस्ति यत् सांस्कृतिकसभ्यतायाः प्रसारात् एव विश्वे चिरा शान्तिः भवितुं अर्हति। भारतीयः अध्यात्मवादः लोके प्रख्यातः। इदं सर्वं संस्कृतसाहित्ये भाषायां वा विद्यते, अत एव सर्वेषां जनानां कृते संस्कृतस्य पठनपाठनं आवश्यकं जायते। विदेशीयाः अपि इदं स्वीकुर्वन्ति। दु खदः अयं समाचारः यत् संस्कृतस्य भारते वर्षे एतावान् प्रचारः न विद्यते यावान् भवितव्यः। देशस्य कस्मिन् अपि भागे संस्कृतभाषा अद्य भाषणभाषा, राजभाषा च न अस्ति। केवलं पुस्तकीभाषा इयं या दुर्बोधा काठिना च विद्यते। अद्य कश्चित् अपि न विचारयति यत् कथं संस्कृतं सरलं सुबोधं भवितुं अर्हति। कानि कानि संशोधनानि आवश्यकानि सन्ति येन संस्कृतं भाषणभाषा राष्ट्रभाषा च भवेत्। संस्कृतमहाभवनस्य ये भग्नावशेषाः विद्यन्ते तेषु आवश्यकः सुधारः अपि न क्रियते। अत एव शनैः शनैः भवननाशः अवश्यम्भावी। संस्कृतज्ञैः कथित-विद्वद्भिः संकीर्णहृदयैः इदं क्रियते। वयं हस्तं हस्तोपरि धृत्वा अवलोकयामः संस्कृतनाशं वस्तुतः स्वनाशं विश्वनाशं च, परं किञ्चित् अपि कर्त्तुं न शक्नुमः, अस्यां अवस्थायां एकं एव अवलम्बनं अस्माकम्। देवानां एका प्रतिज्ञा पठिता अस्माभिः—

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय सम्भवामि युगेयुगे॥

(गीता अ० ४; श्लो ७,८)

अनेन योगिनां सद्वचनेन सिद्ध्यति यत् ईश्वरधर्मस्य एवमेव तस्याः भाषायाः यस्यां अयं धर्मः विद्यते नाशः भवितुं न अर्हति। मनुष्यैः तु अवश्यमेव ईदृशानि कार्याणि क्रियन्ते येन ईश्वर-वस्तूनां अपि नाश. निकटतमः आगच्छेत् परं ईश्वरप्रेरणया देवताभिः तेषां रक्षा युगे युगे क्रियते। स युगः आगतः अस्ति, अत एव नवीनयुगारम्भः भवति एव। यत् किञ्चित् अत्र दीयते तत्सर्वमेव ईश्वरप्रेरणया। दीर्घकालपर्यन्तं गम्भीरतया मनो-योगेन च इदं विचारितं अस्माभिः यत् संस्कृतस्य कथं कल्याणं भवितुं अर्हति ? शनैः शनै. ईश्वरकृपया उद्बोधनं सञ्जातं यत् मुख्यतः अत्र चतुर्षु सूत्रेषु दीयते—

## चत्वारि सूत्राणि।

(१) "असंहिता-वाक्ये"

व्याख्या— वाक्येषु संहिता कदापि न कार्य्या। वाक्यपदानि स्वरूपे तथा पृथक् पृथक् तिष्ठन्तु। अयमेव एकः कल्याणकरः मार्गः, येन संस्कृतस्य सारल्यकारणात् महीयान् प्रचारः भवितुं अर्हति।

(२) "द्विवचननिस्सारणम्"

व्याख्या— संज्ञासु क्रियासु द्विवचनस्य आवश्यकता न विद्यते, अत एव द्विवचनस्य निस्सारणं क्रियेत।

(३) "चतुर्लकाराः"

व्याख्या— संस्कृतभाषायां केवलं चतुर्लकाराः स्युः, अर्थात् लट् लट् लङ् लिङ् ( विध्यादौ तथा हेतुहेतुमद्भावादौ )।

( ४) "विसर्गादर्शनम्"

व्याख्या— अस्य सूत्रस्य व्याख्या अस्मिन् अध्याये दीयते। अहं विचारयामि यत् अयं सुधारः स्वत एव संस्कृते २५ वर्षान्तरं आगमिष्यति। तदा भविष्यति संस्कृतस्य सर्वकालीनं रूपम्। तस्मिन् रूपे एव संस्कृतं विश्वभाषा भविष्यति पूर्ववत्।

शतृप्रत्ययान्तः शब्दः अव्ययं मन्येत।

इमानि मुख्यसंशोधनानि सन्ति। अन्यानि अपि संशोधनानि सन्ति यानि अस्मिन् पुस्तके दीयन्ते। अस्माकं विचारानुसारं इदं अपि आवश्यकं संशोधनं अस्ति यत् शतृप्रत्ययान्तः शब्दः अव्ययरूपे तिष्ठेत् यथा तुमुन्-क्त्वा-णमुल् प्रत्ययान्ताः शब्दाः अव्ययरूपाः मन्यन्ते। अस्मिन् सम्बन्धे इदं कारणं अस्ति। शतृप्रत्ययान्तः शब्दः क्रियारूपेण तिष्ठति अर्थात् अयं तु क्रियारूपः भवति। अन्या अपि क्रिया भवति एव। साम्प्रतं अनेन प्रकारेण लिख्यते,

(१) स गच्छन् आसीत्।
(२) सा गच्छन्ती आसीत्।
(३) वायुयानं गच्छत् आसीत्।

अत्र गच्छन्, गच्छन्ती, गच्छत् शब्दाः क्रियारूपेण तिष्ठन्ति। स्वयं गच्छन्, गच्छन्ती, गच्छत् क्रियारूपाः शब्दाः सन्ति, परं यावत् काचित् अन्या क्रिया वाक्ये न दीयते तावत् अर्थपूर्त्तिः न भवति। वस्तुतः अत्र गच्छन्, गच्छन्ती, गच्छत् शब्दाः विशेषणानि न सन्ति यानि अद्य मन्यन्ते। इदं अन्यासु भाषासु अपि न अवलोक्यते। अत एव अस्माकं विचारानुसारं शतृ-

प्रत्ययान्तः शब्दः अव्ययरूपः व्याकरणे ग्राह्यः। केवलं अन्यस्यां क्रियायां परिवर्तनं स्यात्। पूर्वोक्तानि वाक्यानि अनेन प्रकारेण लेखनीयानि—

(१) स गच्छत् आसीत् ( एकवचने )
(२) ते गच्छत् आसन् ( बहुवचने )
(३) सा गच्छत् आसीत् ( एकवचने )
(४) ताः गच्छत् आसन् ( बहुवचने )
(६) वायुयानं गच्छत् आसीत् ( एकवचने )
(५) वायुयानानि गच्छत् आसन् ( बहुवचने )

'गच्छत्' शतृप्रत्ययान्तः शब्दः वस्तुतः क्रियायाः कार्यं करोति, तत्तु वस्तुतः क्रिया एव अस्ति, सहायकी क्रिया मन्येत मुख्यक्रिया वा। मुख्या क्रिया मन्येत चेत् तदा आसीत् सहायक-क्रियारूपेण मंस्यते। वस्तुतः 'गच्छत्' शब्दः ईदृशे प्रयोगे 'विशेषणम्' भवितुं न अर्हति परं 'गच्छत्' शब्दस्य ईदृशः प्रयोगः अपि भवितुं अर्हति यत् तत् 'विशेषणम्' मन्येत। तत्र अपि तत् अव्ययरूपेण तिष्ठेत्। अस्मिन् काचित् अपि हानिः न अस्ति, यथा—

(१) भाषणं कुर्वता तेन।
(२) भाषणानि कुर्वद्भिः तैः।

एतयोः स्थाने ईदृशः प्रयोगः शतृप्रत्ययान्त-शब्दस्य अव्यय-रूपेण स्यात्।

(१) भाषणं कुर्वत् तेन।
(२) भाषणानि कुर्वत् तैः।

तुमुन्-क्त्व-णमुल् प्रत्ययान्तशब्देषु अन्तरं भवितुं न अर्हति। इमे सर्वे क्रियारूपाः, क्रियार्थप्रदर्शकाः, वस्तुतः सहायकक्रियाः मुख्यक्रियाः वा भवन्ति एव। अत एव तुमुलादि-प्रत्ययान्ताः

शब्दाः यदि अव्ययरूपाः भवन्ति तदा शतृप्रत्ययान्ताः अपि अव्ययीभावं गृह्णन्तु। इदं विचारणीयं विद्वद्भिः। अस्माकं तु इमानि सर्वाणि विशेष-निवेदनानि सन्ति यानि संस्कृतहिताय दीयन्ते।

इदं स्पष्टतया बलपूर्वकं च निवेदितं अस्माभिः भूयः अपि निवेद्यते अत्र यत् संस्कृतं वैदिकभाषातः निस्सारितं विद्वद्भिः। अस्य निवेदनस्य अयं आशयः वेदभाषा तु सृष्ट्याख्यकालात् विद्यते। यदा यदा हि सृष्टिः भवति तदा वेदभाषा ईश्वरज्ञानोपेता देवताभिः दीयते जीवमात्रकल्याणाय विशेषतया मानवीय सृष्टेः हिताय। लोके वेदभाषातः संस्कृता भाषा 'संस्कृतम्' नाम आचार्यैः विद्वद्भिः च निस्सारिता। संस्कृतायाः भाषायाः अर्थः अयं यत् इयं भाषा निर्मिता अर्थात् प्रथमं लौकिक-संस्कृतस्य व्याकरणं रचितं अनन्तरं भाषाप्रचारः अभवत्। वैदिकभाषा तु आदितः आसीत्।

अस्माकं आचार्यैः द्वौ विभागौ कृतौ। वेदः, लोकश्च इति। वेदे वेदभाषा प्रयुज्यमाना स्यात्, लोके सांस्कृता भाषा, वेदभाषातः एका निर्मिता भाषा, प्रयोक्तव्या स्यात्। प्रथमं संस्कृतस्य नियमाः निर्मिताः अनन्तरं तद्रूपा भाषा 'संस्कृतम्' नाम प्रचालिता। मुख्यतः कृत्रिमभाषा इयम्। सांस्कृता भाषा पूर्णतया स्वाभाविकी भाषा कथयितुं न शक्यते। यदि काचित् भाषा प्रथमतः विद्यमाना स्यात्, तथा तस्याः व्याकरणं अनन्तरं निर्मितं स्यात् तदा तत् स्वाभाविकी भाषा, यत् यत् संस्कृते स्वाभाविकरूपेण विद्यते तत्सर्वं वेदभाषायाः। यदि किञ्चित् वस्तु स्वप्रकृतिं, स्वभावं, 'स्वस्रोतं प्रति' चलति, तत् एव जीवितुं शक्नोति अन्यथा नहि। अस्य अयं अर्थः यत् संस्कृताभाषा शनैः शनैः वेदभाषातुल्या स्यात् अर्थात् स्वस्रोतः प्रति शनैः शनैः गच्छत् तदा

सा वेदभाषावत् लोके सर्वकालीना भवितु अर्हति। यदि संस्कृतात्, कृत्रिमता दूरीभवेत्, वेदभाषावत् स्वाभाविकता आनीयेत, तदा संस्कृत अमर स्यात्। संस्कृत कृत्रिमोपायै उत्पन्न, अद्य नियमपाश निरुद्ध आलोक्यते। एतादृशस्य जीवनाशा का? यदि तत् नियमबन्धनै मुक्त स्यात्, तदा जीवनाशा भवितु अर्हति। संस्कृतपण्डितै विशेषतया स्वपाण्डित्यप्रदर्शकैः 'संस्कृतम्' अनन्तनियमपाशैः बन्द्धीकृत, येन तत मरणासन्न सञ्जातम्। ते एव बन्धनशैथिल्येन 'संस्कृतम्' मुक्तीकर्तुं शक्नुवन्ति, येन तत् स्वातन्त्र्य-श्वास भूय ग्रहीतुं समर्थ स्यात्। देशभाषा अपि स्वतन्त्रा भवितव्या।

यस्मात् कालात् अस्माक देश दासतायां निबद्ध अभवत्, तस्मात् कालात् अस्माक 'संस्कृतम्' भाषा अपि नियमपाशेषु निबद्धा। अद्य सा अपि मुक्ता भवितव्या। अह सानुरोध सविनय प्रार्थये यत् पण्डिता तां अमरभारतीं 'मृतप्रायां' मुक्ता कुर्वन्तु, येन तत् स्वरूपे तिष्ठेत्। किं पण्डिताः 'मृतप्राय-संस्कृतस्य इमां प्रार्थनां न स्वीकरिष्यन्ति। संस्कृतस्य उत्थानसमयः आगतः। ते निमित्तमात्र भूत्वा यशः प्राप्नुयु। परं इद सम्भव अस्ति यत् कतिपयपण्डिता अस्य सुस्पष्टकथनस्य अपि विरोध कुर्युः। तेषां मतानुसार यत्किञ्चित् प्राचीनपुस्तकेषु विद्यते आवश्यक अनावश्यक वा तत्सर्वं पूर्णं दोषरहित अस्ति। ईदृशाः पण्डितवर्या स्वमतानुसार कुर्वन्तु पर अद्य कथित् अपि पुरुष संस्कृतस्य उन्नतिमार्गं अवरोद्धु न शक्नोति। इदं साटोप कथितं अस्माभिः यत् संस्कृतस्य उत्थानकाल आगतः। सर्वे जना शृण्वन्तु।

## तदा का भविष्यवाणी ?

वय विचारयाम यत् देशस्य प्राय सर्वे विद्वांसः एकस्वरेण

सम्यक् विचार्य एतेषां अन्येषां वा संशोधनानां समर्थनं करिष्यन्ति। एतेषां संशोधनानां अध्यायक्रमानुसारं पुनः स्पष्टी-करण अत्र क्रियते।

(१) अस्माकं मतानुसारं इदं आवश्यकं अस्ति यत् वाक्येषु संहिता कदापि न कार्य्या स्यात् येन वाक्पदानां रूपाणि सुस्पष्टानि स्युः। वाक्ये पदानां पृथक् पृथक् स्थितिः आवश्यकी। एकपदे सन्धिः भवतु, धातूपसर्गयोः सन्धिः भवतु, परं वाक्यस्य विविधपदेषु सन्धिः कदापि न कार्य्यः येन पदानि विरूपतां न गृह्णन्तु, तथा तानि सर्वाणि स्वरूपे तिष्ठन्तु। इदं गद्ये पद्ये च समानरूपेण भवतु। यथा गद्ये वाक्यानि भवन्ति तथा पद्ये अपि भवन्ति। कतिपयविद्वांसः मन्यन्ते यत् गद्ये अपि सर्वासु दशासु सन्धिः भवेत् यथा पद्ये मन्यते।

गद्यविषये सर्वे विद्वांसः मन्यन्ते यत् वाक्येषु सन्धिः वैकल्पिकः विषयः अर्थात् सन्धिः क्रियेत न वा। संस्कृतव्याकरणे इदं कुत्रापि न दत्तं अस्ति यत् पद्येषु सर्वासु दशासु सन्धिः कार्यः। अनेन सिद्ध्यति यत् गद्यवाक्यानि स्युः पद्यवाक्यानि वा तेषु सन्धिः अकार्य्यः। द्वितीयाध्याये (अस्य पुस्तकस्य) अनेकानि व्याकरणप्रमाणानि दत्तानि अस्माभिः येन सुस्पष्टी भवति यत् एकपदे सन्धिः आवश्यकः, परं वाक्यस्य विविधपदेषु सन्धिः व्याकरणसम्मतः न अस्ति। अस्य व्याकरणसम्मतनिवेदनस्य अयं निष्कर्षः यत् वाक्येषु सन्धिः कदापि न कार्य्यः। "असंहिता-वाक्ये" एकं व्याकरणसम्मतं कल्याणकरं नवीनं अधिकारसूत्रं यत् विद्वद्भिः स्वीकार्य्यम्।

वाक्येषु सन्धिः वैकल्पिकः इच्छाधीनः मन्येत चेत्, तदा दीयेत न वा। एतन्मतानुसारं वाक्येषु सन्धिः न क्रियेत चेत् तदा

काचित् अपि हानिः न अस्ति । अस्य अयं आशयः यत् वाक्येषु सन्धिविषयः इच्छाधीनत्वं प्राप्नोति । यदि कश्चित् पुरुषः वाक्येषु सन्धिं न करोति तदा स लेखः अपि व्याकरणसम्मतः भविष्यति। परं दुःखदः अयं समाचारः यत् अद्य कश्चित् अपि पण्डितः न मन्यते यः सन्धिरहितानि वाक्यानि लिखति भाषते वा । इदं इदानीन्तनानां पण्डितवर्य्याणां दुराग्रहमात्र एव। यदि ते वाक्येषु सन्धिं वैकल्पिकं इच्छाधीनं वा मन्यन्ते तदा अस्य विरोधस्य कः अर्थः ।

अस्माकं तु इदं निश्चितं मतं अस्ति यत् वाक्येषु सन्धिः वैकल्पिकः मन्येत चेत्, तथापि न्यूनातिन्यूनं २५ वर्षपर्य्यन्तं तस्य प्रयोगः पुस्तकेषु भाषणेषु अकार्य्यः । नवीनसंस्कृतसाहित्यं सन्धिरहितं प्रकाशितं स्यात् । एवमेव प्राचीनसाहित्य अपि यत् प्रकाशितं स्यात् तत् अपि सन्धिरहितं प्रकाशितं भवेत् अनेन महीयान् लाभः भवितुं अर्हति । अहं विचारयामि यत् इदं कार्य्यं क्रियेत चेत् तदा २५ वर्षाभ्यन्तरे संस्कृतं जनभाषा भवितुं अर्हति पूर्ववत् । राष्ट्रभाषा तु ५ वर्षाभ्यन्तरे भवितुं अर्हति । सन्धिरहितं संस्कृतं अत्यन्तसरलं अस्ति । ईदृशं संस्कृतं सर्वे जनाः शीघ्रतया ज्ञातुं शक्नुवन्ति । भारतस्य प्रायः सर्वाः प्रान्तीयभाषाः संस्कृतात् निस्सृताः । न्यूनातिन्यूनं सर्वासु प्रान्तीय भाषासु संस्कृतस्य महीयान् प्रभावः विद्यते । प्रायः सर्वासु भाषासु संस्कृतस्य अक्षय्य-शब्दकोषः वर्त्तमानः अस्ति । तासु भाषासु संस्कृतशब्दाः स्वरूपे विरूपे वा प्रयुज्यन्ते । यथा संस्कृतभाषायां ' निवेदनं इति कथ्यते '। अन्यासु भाषासु अर्थात् प्रान्तीय भाषासु निवेदनशब्दः प्रयुक्तः भवति । भेदः वस्तुतः कश्चित् अपि न अस्ति। अन्यासु प्रान्तीय भाषासु नपुंसकलिङ्गस्य चिह्नं न दीयते यत् संस्कृतभाषायां

दीयते। एवमेव अन्यशब्दविषये अपि सत्यं आस्ति। बङ्गाली-गुजराती-मराठी-हिन्द्यादिभाषाः तु वस्तुतः संस्कृतस्य भ्रंशरूपाः एव। यदि संस्कृतं सरलं भविष्यति तदा तस्य प्रचारात् अन्य-प्रान्तीय भाषाणां प्रचारः स्वत एव न्यूनः भविष्यति। शनैः शनैः देशे संस्कृतस्य सर्वत्र प्रचारः भूत्वा संस्कृतं एव राष्ट्रभाषा-राज-भाषा-जनभाषारूपे स्थास्यति। सृष्टिकालारम्भात् संस्कृतं ( वेदभाषा ) अस्य देशस्य धर्मभाषा विद्यते। अस्माकं भगवन्तः वेदाः अन्यानि सर्वाणि शास्त्राणि अपि अस्यां एव भाषायां विद्यन्ते। अस्माकं सर्वाणि धार्मिक-कृत्यानि अपि जन्मतः आरभ्य मरणपर्य्यन्तं अस्यां एव भाषायां भवन्ति। धर्मसम्बन्धात् तु संस्कृतस्य पठनपाठनं सर्वेषां भारतीयानां कृते आवश्यकं अनिवार्य्यं च जायते।

धर्मसम्बन्धात् संस्कृते भारतीयानां महती श्रद्धा, प्रेम, आदर-दृष्टिः च विद्यते। अनन्तकालपर्य्यन्तं संस्कृतं देशस्य भाषण-भाषा राष्ट्रभाषा च अतिष्ठत्। अस्माकं सर्वं साहित्यं अस्यां एव भाषायां विद्यते। संस्कृतं भूयः राष्ट्रभाषा भाषणभाषा च भविष्यति। अस्माकं सर्वं साहित्यं अस्यां एव भाषायां विद्यते। संस्कृतं भूयः राष्ट्रभाषा भाषणभाषा च भवेत् अस्मिन् सम्बन्धे कस्यचित् अपि भारतीयस्य विरोधः भवितुं न अर्हति। अत एव संस्कृतस्य सरलीकरणं एव कर्त्तव्यम्। 'असंहितावाक्ये' अथवा 'वाक्ये संहिता विवक्षां अपेक्षते' द्वयोः सूत्रयोः वस्तुतः एकः भावः। न्यूनातिन्यूनं पण्डितैः इदं तु मन्यते एव यत् सन्धिः वाक्ये वैकल्पिकः इच्छाधीनः अर्थात् वाक्ये क्रियेत न वा।

अहं निवेदयामि यत् प्रायः द्विसहस्रवर्षपर्य्यन्तं पण्डितैः व्याकरणनियमविरुद्धं अपि वाक्येषु ( गद्ये पद्ये च ) सन्धिः कृतः। का हानिः यत् साम्प्रतं २५ वर्षपर्य्यन्तं व्याकरणासम्मतः

वाक्येषु सन्धिः न क्रियेत। इदं तु वस्तुतः संशोधनं न आस्ति। इदं तु व्याकरणसम्मतं आस्ति यत् "वाक्येषु" (गद्ये पद्ये वा) सन्धिः कदापि न क्रियेत। केवलं इदं कार्य्यं क्रियेत चेत् तदा महालाभः भवितु अर्हति। केवलं अनेन एव संस्कृते वर्णनातीतं सारल्यं आगमिष्यति, येन संस्कृतं अद्य एव राष्ट्रभाषापदं प्राप्तुं शक्ष्यति। केवलं घोषणामात्र निश्चयमात्रं एव विदुषां कर्त्तव्यम्। कतिपयसंस्कृतज्ञाः ये संस्कृत 'एकदेशीयं, एकजातीयं, एकवर्गीयं वा' इति मन्यन्ते, ते अवश्यमेव अस्य विरोधं करिष्यन्ति।

ईदृशानां जनानां संस्कृतकाठिन्ये स्वार्थः आस्ति। ईदृशैः महानुभावैः सर्वव्यापकः सर्वज्ञः, सर्वशक्तिमान् ईश्वरः अपि बन्दीकृतः, यस्य सम्पूर्णज्ञानं वेदरूपे अपि सर्वेषां मानवानां कृते वारितम्। ईदृशैः संस्कृतं अपि काठिनीकृतम्। ईदृशैः समये समये ईदृशाः नियमाः वार्तिकानि वा संस्कृतव्याकरणे दत्तानि येन संस्कृत-पठनं दुर्गमं अभवत्। एतेषां कृत्रिमोपायानां नियमानां वार्तिकानां च दूरीकरणं अवश्यं कर्त्तव्यम्। अस्माकं इयं भविष्यवाणी यत् ईदृशैः महानुभावैः अद्य संस्कृतस्य उन्नतिमार्गः अवरोद्धुं न शक्यते। इदानीं संस्कृतलेखने भाषणे वा सन्धिरूपि-कण्टकः (गद्यपद्यमयेषु वाक्येषु) न स्थास्यति, तथा संस्कृतं शीघ्रं राष्ट्रभाषा भविष्यति।

(१) (अ) संस्कृतभाषायां दशलकाराणां आडम्बरः व्यर्थं एव उपस्थाप्यते, संस्कृतविद्यार्थिनां हृदयेषु भयः उत्पन्नक्रियते येन ते संस्कृतं न पठेयुः। अद्य इदं भवितुं न अर्हति। अद्य जनाः जानन्ति एव यत् भाषा देशहिताय जनहिताय विधते नतु देशः जनसमूहः वा भाषायै। भाषासुबोधाय ज्ञानवृद्धिव्यापाराय

भवति न तु दुर्बोधाय ज्ञानमार्गविरोधाय। ईदृशैः नियमैः संस्कृतं काठिनीकृतं येन ज्ञानवृद्धिः सर्वथा अवरोधिता। ईश्वरज्ञानं अपि अवरोधितं लौकिकज्ञानं अपि। संस्कृतज्ञाः "कूपमण्डूका" इति शब्देन सत्क्रियन्ते। किं संस्कृतज्ञाः सदा एव "कूपमण्डूकाः" स्थास्यन्ति, अथवा संसारस्य प्रगत्या सह एकीभूय अग्रेसराः भविष्यन्ति।

अस्य पुस्तकस्य तृतीयाध्याये सुस्पष्टीकृतं अस्माभिः यत् कुतः केवलं चतुर्लकाराः भवितव्याः दशलकाराणां स्थाने। अद्यतन-अनद्यतन भेदं अवलम्ब्य लकार-विभागः स्थातुं न शक्नोति। 'कृत्रिमभेदः' अयं, अत एव शीघ्रं दूरीकरणीयः। संसारस्य कस्यांश्चित् अपि भाषायां कालभेदः अनेन प्रकारेण न क्रियते, अत एव व्यावहारिक-दृष्ट्या सर्वथा त्याज्यः। अनेकानि प्रमाणानि दत्तानि अस्माभिः स्वपक्षपोषणे। तानि सर्वाणि अवलोकनीयानि तत्र। संस्कृतकाठिन्यस्य भीषणतायाः प्रदर्शनाय अपि 'डुकृञ्' धातोः सर्वाणि रूपाणि दत्तानि अस्माभिः। तानि प्रायः २५११ रूपाणि भवन्ति। एकस्य धातोः २५११ रूपाणि भवन्ति तदा १९४४ धातूनां कियन्ति रूपाणि परस्मैपदे आत्मनेपदे च भविष्यन्ति? बहवः धातवः उभयरूपाः भवन्ति। अस्माभिः गणना कृता यत् १९४४ धातूनां दशलकारेषु प्रायः ३६ लक्षरूपाणि भविष्यन्ति। एकस्य धातोः अपि सर्वाणि रूपाणि पण्डिताः स्मर्तुं न शक्नुवन्ति तदा का कथा बालकानाम्?

अनेन सुस्पष्टं भवति यत् धातूनां प्रायः ३६ लक्षरूपाणि भवन्ति। इदं विहाय विविध-नाम-स्थान-भाव-जातिवाचकादि-संज्ञानां सर्वनामसंज्ञानां, विशेषणानां शतृ-शानच्-कानच्, तव्यत्, तव्य अनीयर् इत्यादिप्रत्ययान्तशब्दानां रूपाणि भवन्ति।

तानि सर्वाणि प्रायः २० लक्षकानि भवितुं अर्हति। अनेन सिद्ध्यति यत् कृत्रिमोपायैः कथित-विद्वद्भिः अनन्तानि शब्द-रूपाणि सांस्कृतायां भाषायां दत्तानि, यानि स्मृतिपथे कदापि आगन्तुं न शक्नुवन्ति। अनेन प्रायः ५६ तः ६० लक्षशब्दाः संस्कृते भवितुं अर्हन्ति। आंग्लभाषा अद्य अन्ताराष्ट्रियभाषा, सर्वासु भाषासु उन्नता, प्रगतिशीला, परं तस्यां अपि अधिका-दधिकं द्वित्रिलक्षतः अधिकाः शब्दाः न विद्यन्ते। ईदृशी व्यावहारिकी स्थितिः अन्यासां उन्नतानां भाषाणाम्। अवलोक-यन्तु भवन्तः विचारशीलपुरुषाः, संस्कृतोन्नतीच्छुकाः यत् मृतप्रायसंस्कृतभाषा प्रायः ६० लक्षशब्दयुता। ईदृशी कृत्रिम-भाषा मृतप्राया मन्तव्या एव। किं ईदृशं संस्कृतं 'कथित-सांस्कृताभाषा' 'असांस्कृता' 'अस्वाभाविकी' 'कृत्रिमा' वा भवितुं न अर्हति !

इयं अस्माकं द्वितीया भविष्यवाणी यत् दशलकाराः स्थातुं न शक्नुवन्ति। यदि सत्यं सत्यं भारतीयाः इच्छन्ति यत् संस्कृतं राष्ट्रभाषा भवेत् पूर्ववत् तदा अयं सुसंस्कारः आवश्यकः, कर्त्तव्यः, अनिवार्य्यः च। अनेन एव संस्कृतं वास्तविकरूपेण 'सुसांस्कृता-भाषा'। अनन्तरं राष्ट्रभाषा च भवितुं अर्हति। न अन्यः मार्गः विद्यते अस्माकं कल्याणाय संस्कृतहिताय च। नवीन-साहित्ये केवलं चतुर्लकाराणां प्रयोगः कार्य्यः। प्राचीनसाहित्ये अपि चतुर्लकाराणां प्रयोगः भवितुं अर्हति। अस्मिन् काचित् अपि हानिः न अस्ति। विचाराणां वस्तुतः मूल्यं अस्ति। भाषा अपि प्रायः स्वरूपे स्थास्यति। अद्य इदं कार्य्यं अपि अवरोद्धुं न शक्यते।

(ब) यथा दशलकाराः स्थातुं न शक्नुवन्ति तथा द्विवचनं अपि स्थातुं न शक्नोति क्रियासु। अस्य पुस्तकस्य तृतीयाध्याये

चतुर्थाध्याये च पूर्णतया स्पष्टीकृतं अस्माभिः यत् द्विवचनं संसारस्य प्रायः सर्वासु भाषासु न विद्यते एकां द्वे वा भाषे विहाय। इदं अपि सुस्पष्टीकृतं अस्माभिः यत् दशलकाराः सर्वथा अनावश्यकाः। केवलं चतुर्लकारैः अस्माकं कार्य्यं चलितुं शक्नोति यथा अन्यासु भाषासु भवन्ति। संस्कृतव्याकरणे एकः अन्यः अपि उपायः भूतकालस्य अवबोधनाय विद्यते। 'लट्' लकारे 'स्म' शब्दस्य प्रयोगः क्रियते यथा 'स गच्छतिस्म' 'ते गच्छन्तिस्म' इत्यादयः। अनेन स्पष्टं भवति यत् त्रिलकारैः अपि कार्य्यं चलितुं शक्नोति।

इदं तृतीयाध्याये सुस्पष्टीकृतं अस्माभिः यत् द्विवचनं निस्सार्य चतुर्लकारेषु केवलं ३८४ रूपाणि भविष्यन्ति, २५१२ रूपाणां स्थाने, एकस्य धातोः। ३८४ रूपाणि तु कश्चित् अपि पुरुषः कण्ठस्थीकर्त्तुं शक्नोति। इमानि ३८४ रूपाणि अपि न्यूनानि भवितुं अर्हन्ति यदि सारल्यार्थं 'लट्' लकारे 'स्म' शब्दस्य प्रयोगः क्रियेत भूतकालस्य अवबोधनाय। संस्कृतज्ञाः इच्छन्ति चेत् यत् संस्कृतं व्यावहारिकी भाषा राष्ट्रभाषा च भवेत् तदा द्विवचनं अवश्यमेव निस्सारणीयम्। कृत्रिमः वचन-विषयकनियमः अयम्। यदि द्विवचनं स्यात् तदा त्रिवचनं, चतु-र्वचनं इत्यादिकं कथं न स्यात्। तृतीया भविष्यवाणी इयं यत् द्विवचनं क्रियासु स्यातुं न शक्नोति।

(३) चतुर्थाध्याये संज्ञानां विषये सुस्पष्टीकृतं अस्माभिः यत् विशेष-नाम-स्थानादि संज्ञासु केवलं एकवचने रूपाणि भवितुं अर्हन्ति। द्विवचनं तु संज्ञासु अपि स्यातुं न शक्नोति यथा क्रियासु। यानि यानि प्रमाणानि द्विवचनस्य निस्सारणाय दत्तानि अस्माभिः तानि सर्वत्र लगन्ति अर्थात् क्रियासु एवमेव

संज्ञासु। इदं अपि स्पष्टीकृतं अस्माभिः यत् सम्बोधनकारकस्य आवश्यकता न विद्यते। अतएव तत् निस्सारणीयम्। सम्प्रदान-कारकस्य एवमेव अपादानकारकस्य अवबोधनाय क्रमानुसारं सम्बन्धकारकस्य प्रयोगं कृत्वा 'कृते' तथा 'त' शब्दस्य प्रयोगः क्रियते। अनेन संस्कृते सारल्यं आगच्छति, अत एव अयं प्रयोगः करणीयः। प्राचीनविद्वद्भिः अपि समये समये विचारः कृतः भाषायां सरलतायाः आनयनाय। परं प्रायः द्विसहस्रवर्षात् इदं कार्यं अवरुद्ध अतिष्ठत् दासताकारणात् अन्य कारणेभ्यः अपि। अद्य स्वतन्त्रताकारणात् समयः आगतः अस्ति यत् विद्वांसः विचारयेयुः यत् कानि कानि संशोधनानि आवश्यकानि सन्ति संस्कृतभाषायां येन सा वास्तविकरूपेण 'अमरा' व्यवहारयोग्या च स्यात्।

(४) 'विसर्गादर्शनम्' आस्ति एकः अन्तिमः सुधारः येन संस्कृतं सर्वकालपर्य्यन्तं स्थातुं शक्नोति। यदि पूर्वोक्तानि संशोधनानि भाषायां क्रियेरन्, तदा अयं सुधारः २५ वर्षानन्तरं स्वत एव आगमिष्यति करिष्यते च संस्कृतज्ञैः संस्कृतभाषा-भाषिभिः। तदा संस्कृतभाषायां कठिनतायाः आत्यन्तिकः ह्रासः भविष्यति। तदा संस्कृतं एका स्वाभाविकी भाषा व्यावहारिकी भाषा च भविष्यति। तदा अस्माकं मतानुसारं संस्कृतं एका सर्वकालीना भाषा भवितुं अर्हति। संस्कृतं राष्ट्रभाषा अन्ताराष्ट्रिय-भाषा च भविष्यति एव पूर्ववत् यत् पूर्वोक्तानि संशोधनानि प्रायः व्याकरण-सम्मतानि व्यवहारसिद्धानि स्वीकृतानि स्युः विद्वद्भिः। अस्माकं निश्चितं मतं अस्ति यत् प्रचलितरूपे (साम्प्रतं संस्कृतं केवलं पुस्तकी भाषा, अव्यावहारिकी भाषा अस्ति) संस्कृतं व्यावहारिकी भाषा अपि भवितुं न अर्हति तदा का कथा तस्य राष्ट्रभाषात्वस्य। इदं कथने दोदूयते अस्माकं

चेतः। अत एव इदं सर्वं विचारणीयं विद्वद्भिः। यत्, यत् देश-भाषा-जाति-हिताय स्यात् तत् एव निस्स्वार्थभावेन करणीयम्। अन्यथा समयः, देशपरिस्थिति-बलात् कारयिष्यति, अथवा काले ईश्वरप्रेरणया, ईश्वरेच्छया तत्सर्वं भविष्यति।

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया॥
(गीता अ. १८, श्लो. ६१)

अस्यां अवस्थायां कथित-जगद्गुरूणां विदुषां शिरसि कलङ्कः लगिष्यति। लौकिक-संस्कृतोत्थाने तु विद्वद्भिः प्रयत्नः करणीयः। वेदः तु स्वत एव स्थास्यति। ईश्वरस्य ज्ञानं तु तत् देवताभिः रक्षितम्। लोके ऋषि-मुनि-ज्ञानं लौकिकैः रक्षितं स्यात्। इयं परम्परा।

लोके 'विसर्गादर्शनम्' इति सूत्रस्य कः अर्थः किं प्रयोजनम्? संस्कृतभाषायां विसर्गस्य स्थाने स्थाने प्रयोगः भवति। एतावान् प्रयोगः कस्याञ्चित् अपि भाषायां न भवति। कारणं किम्? कृत्रिमः उपायः अयम्। संसारस्य सर्वासु भाषासु प्रातिपदिक-रूपे शब्दः 'पद' इति मन्यते। वस्तुतः अर्थवान् शब्दः पद-वाच्यः भवितव्यः, परं संस्कृतभाषायां इदं न भवति। किं प्राति पदिकं संस्कृतव्याकरणानुसारं।

'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्। (१।२।४५)

व्याख्या— धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वा अर्थवच्छब्द-स्वरूपं प्रातिपदिकसंज्ञं स्यात्।

संस्कृतव्याकरणानुसारं 'पदं' किं भवति,
'सुप्तिङन्तं पदम्'। (१।४।१४)

व्याख्या— सुबन्तं तिङन्तं च पदसंज्ञं स्यात्।

एकं उदाहरणं अत्र दीयते। 'राम' एकः अर्थवच्छब्दः संस्कृत-व्याकरणानुसारं अयं शब्दः 'प्रातिपदिकं' इति कथ्यते। इदं प्रातिपदिकं सुबन्तं तिङन्तं च पदसंज्ञं स्यात्। संस्कृतभाषायां प्रातिपदिकानि प्रयुक्तानि भवितुं न अर्हन्ति। प्रातिपदिकेषु 'सुप्' आदि विभक्तयः दीयन्ते, तदा प्रातिपदिकानि पदसंज्ञकानि भूत्वा प्रयुक्तानि भवन्ति। संसारस्य अन्यासु भाषासु इयं स्थितिः न विद्यते। तासु प्रातिपदिकानि अर्थात् अर्थवच्छब्दाः स्वरूपे प्रयुक्ताः भवन्ति। इयं वस्तुतः स्वाभाविकी स्थितिः। अन्यासु भाषासु एक-वचने तु प्रातिपदिकरूपाणि पदानि प्रयुक्तानि भवन्ति, बहुवचने विविधकारकेषु वा विभक्तयः दीयन्ते। अनेन तासु भाषासु सरलता विद्यते। तासु प्रातिपदिकानि एव पदसंज्ञकानि भवन्ति। द्वितीयं प्रायः सरलविभक्तयः अपि तासु दीयन्ते। तासु भाषासु प्रायः पृथक् विभक्तयः विद्यन्ते, शब्दाङ्गं भूत्वा न वर्त्तन्ते।

संस्कृतभाषायां इयं कृत्रिमता यत् प्रथमं तु प्रातिपदिकानि पदानि न भवन्ति। यावत् तेषु प्रातिपदिकेषु विभक्तयः न दीयन्ते तावत् प्रातिपदिकानि पदसंज्ञकानि न जायन्ते। अनेन प्राति-पदिकानां पृथक् स्थितिः, पदानां पृथक् स्थितिः संस्कृतभाषायां भवति। इदं अपि संस्कृतकाठिन्यस्य एकं प्रधानकारणम्। 'राम' अर्थवच्छब्दः विद्यते, अत एव स एव पदसंज्ञकः स्यात्। अस्यां दशायां 'सुप्' विभक्तिः अनावश्यकी। इदं सर्वेषु शब्देषु कल्पनी-यम्। यदि प्रातिपदिकानि पदानि पदसंज्ञकानि वा संस्कृतभाषायां गृहीतानि स्युः, तदा वर्णनातीतं सारल्यं आगमिष्यति। कर्तृ-कारके तदा 'राम' इति एकवचने भविष्यति। द्विवचनस्य आव-श्यकता न अस्ति। अतः 'रामौ' शब्दः निस्सारितः। बहुवचने 'रामाः' इति रूपं भविष्यति, परं 'विसर्गादर्शनम्' इति सूत्र-

वलेन 'रामाः' पदस्य विसर्गस्य लोपं मन्येत। तदा बहुवचने 'रामा' इति पदं भविष्यति। एवमेव अन्येषु स्थलेषु कल्पनीयं, यत्र विसर्गस्य प्रयोगः भवति।

संस्कृतभाषातः कृत्रिमता दूरीकरणाय अस्माकं विशेषनिवेदनं इदं अस्ति। यावत् संस्कृतभाषातः इयं कृत्रिमता न दूरीभवति तावत् तस्याः कठिनता अपि दूरीभवितुं न अर्हति। अत एव कठिनता-दूरीकरणाय कृत्रिमता दूरीकरणीया। अस्माकं विचारे इयं कृत्रिमता संस्कृतभाषातः दूरीकरणाय त्रयः उपायाः अवलम्बनीयाः—

## उपायाः।

(१) प्रथमं तु प्रातिपदिकानि पदसंज्ञकानि गृहीतानि स्युः यथा संसारस्य सर्वासु भाषासु भवति। इयं स्वाभाविकी स्थितिः। स्वाभाविकता भाषायाः महान् गुणः, अस्वाभाविकता, कृत्रिमता वा भाषायाः महान् दोषः। अत एव इदं संशोधनं करणीयं एव। अनेन संस्कृतव्याकरणे भाषायां च सारल्यं आगमिष्यति। इदं आमूलचूडपरिवर्तनं अपि न विद्यते। केवलं शब्दानां एकवचने किञ्चित् परिवर्तनं स्यास्यति यथा 'रामः' स्थाने 'राम' इति पदं मंस्यते।

(२) द्विवचनं निस्सारितम्। अतएव बहुवचने 'राम' शब्दस्य 'राम+जस्' इदं रूपं भविष्यति।

'चुटू' १।३।७

व्याख्या— प्रत्ययाद्यौ चुटू इतौ स्तः।

अनेन 'राम+अस्' इदं रूपं अभवत्। तदा

'विभक्तिश्च' १।४।१०४

व्याख्या— सुप्तिङौ विभक्तिसंज्ञौ स्तः।

'न विभक्तौ तुस्माः' १।३।४

व्याख्या— विभक्तिस्थाः तवर्गसमा न इतः ।

अनेन 'राम+ अस्' इदं रूपं अभवत् ।

'प्रथमयोः पूर्वसवर्णः' ६।१।१०२

व्याख्या— अकः प्रथमाद्वितीययो अचिपूर्वसवर्णदीर्घ एकादेश स्यात् ।

अनेन 'रामा+ स, इदं रूपं अभवत् । तदा

'ससजुषोरुः' ८।२।६६

व्याख्या— पदान्तस्य सस्य सजुष च रुः स्यात् । तदा

'खरवसानयोर्विसर्जनीयः' ८।३।१५

व्याख्या— खरि अवसाने च पदान्तस्य रस्य विसर्ग ।

अनेन 'रामा ' इद् रूपं अभवत् । तदा—

'विसर्गादर्शनम्'

एकस्य नवीनसूत्रस्य बलेन विसर्गस्य लोप मन्येत ।

अनेन 'रामा' इति रूप भविष्यति । अनेन प्रकारेण सर्वासु विभक्तिषु कल्पनीयम् । इदं संशोधनं मन्येत चेत् तदा इमानि रूपाणि ससकारकेषु भविष्यन्ति । यथा—

| एकवचनम् | बहुवचनम् |
|---|---|
| राम | रामा |
| रामम् | रामान् |
| रामेण | रामै |
| रामाय | रामेभ्य |
| रामात् | रामेभ्य |
| रामस्य | रामाणाम् |
| रामे | रामेषु |

सूचना-- परं असाकं मतानुसारं विशेषनाम-स्थानवाचक-संज्ञानां वहुवचनानि भवितुं न अर्हन्ति, अतः 'राम' शब्दस्य केवलं इमानि रूपाणि एकवचने भविष्यन्ति—

एकवचनम्
राम
रामम्
रामेण
रामाय
रामात्
रामस्य
रामे

विसर्गस्य अदर्शनं क्रियासु अपि भवतु यथा संज्ञासु। द्विवचनं तु क्रियासु अपि निस्सारणीयम्। तदा उदाहरणार्थं 'लट्' लकारे इमानि रूपाणि भविष्यन्ति—

| एकवचनम् | वहुवचनम् |
|---|---|
| भवति | भवन्ति |
| भवसि | भवथ |
| भवामि | भवाम (भवामः स्थाने) |

(अ) व्याख्या— 'भवामः' रूपे 'विसर्गादर्शनम्' सूत्रवलेन विसर्गस्य अदर्शनं मन्येत। असाकं मतानुसार केवलं चतुर्लकाराः पर्याप्ताः सन्ति। १० लकाराणां आवश्यघता न अस्ति। अत एव लट्, लङ्, लिङ्, लकारेषु अपि विसर्गस्य लोपः मन्येत।

(आ) व्याख्या— परं समानशब्देषु विसर्गस्य लोपः न स्यात्। यथा 'सः' शब्दः विद्यते, 'स' शब्दः विद्यते। अत्र द्वौ शब्दौ समानौ विद्येते। एकस्मिन् शब्दे विसर्गः विद्यते, द्वितीये शब्दे

विसर्ग न अस्ति। द्वयोः शब्दयो अर्थेषु भिन्नता विद्यते। अत एव एतेषु समानशब्देषु एकस्मिन् शब्दे विसर्गः तिष्ठेत् अर्थभिन्नतायाः शब्दभिन्नतायाः च प्रदर्शनाय। 'स्मः' शब्द उत्तमपुरुषस्य बहुवचनं अस्ति यथा 'वयं स्म', पर 'स्म' शब्दः भूतकालस्य अब बोधनाय प्रयुङ्क्ते यथा 'स गच्छतिस्म'। अत्र द्वयोः समानशब्दयोः एकस्मिन् शब्दे विसर्गः अवश्यमेव तिष्ठतु।' एवमेव समानसंज्ञासु अपि भवतु यथा—

| एकवचनम् | बहुवचनम् |
|---|---|
| रमा | रमाः |

अत्र अवश्यमेव 'रमा' शब्दस्य बहुवचने विसर्गः तिष्ठतु येन शब्दभिन्नता अर्थभिन्नता च सुस्पष्टा स्यात्। अस्माकं निवेदनस्य अय आशयः यत् न्यूनातिन्यूनं विसर्गस्य प्रयोगः स्यात्। कृत्रिम प्रयोगः अयम्।

## अनेन कः लाभः भविष्यति ?

अनेन अयं लाभः भविष्यति यत् संस्कृतात् कृत्रिमता दूरीभूय तस्मिन् स्वाभाविकता आगमिष्यति। यथा अन्यासु भाषासु प्रातिपदिकरूपत्वेन शब्दानां प्रयोगः भवति, तथा एव अत्र अपि भविष्यति। संस्कृतस्य लिपि अर्थात् वर्णमाला, संस्कृतस्य व्याकरणं, (किञ्चित् भाग विहाय) संस्कृतस्य विविधसाहित्य, सर्वोपरि संस्कृतस्य अध्यात्मज्ञानं स्वतः प्रमाण-वेदसम्मत, अद्वितीयं एव। अत एव संस्कृतं एव विश्वभाषा भवितुं अर्हति, भविष्यति च अस्माकं अन्तिमा भविष्यवाणी। यदि संस्कृतस्य कृत्रिमता दूरीकृता स्यात् या केवलं पूर्वोक्त संशोधनं भवितु अर्हति तदा संस्कृतं अवश्यमेव विश्वभाषा भविष्यति। अस्मिन् सन्देह-स्थलं न अस्ति। ईश्वरेच्छा इयम्। परं मनुष्यैः स्वपाण्डित्यप्रदर्शनाय

एव यत् यत् संस्कृतव्याकरणे दत्तं येन संस्कृतं जटिलं कठिनं जातं तत्सर्वं दूरीकरणीयं भविष्यति। तावत्पर्यन्तं संस्कृतस्य राष्ट्रभाषात्वं विश्वभाषात्वं च एका मिथ्या कल्पना एव, स्वप्नः एव, वन्ध्यायाः पुत्रवत आकाशकुसुमवत्।

इदं तथ्यं संस्कृतज्ञैः अपि हृदयाङ्गीकरणीयं यत् सर्वासु जीवित-भाषासु यथावश्यकतानुसारं समये समये संशोधनं भवति, अत एव संस्कृते अपि भाव्यम्। लौकिक-संस्कृतं अपवादः भवितुं न अर्हति। सखेदं अहं निवेदयामि यत् संस्कृतज्ञानां अयं महान् दोषः यत् ते आवश्यकं, अनावश्यकं, उचितं, अनुचितं, सारसहितं साररहितं वा सर्वं ऋषि-मुनि-प्रणीत भ्रान्तिरहितं मन्यन्ते। परं मनुष्यज्ञानं दोषसहितं अपि भवितुं अर्हति। इदं अपि सम्भव अस्ति यत् प्राचीनाचार्य्यैः किञ्चित् वार्त्तिकं कश्चित् नियमः वा स्वसमयस्य आवश्यकतानुसार दत्तः यः अद्य न लगति, तदा तस्य संशोधने का हानिः। भगवान् मनुः उपादिशति यत्—

या वेदबाह्याः स्मृतयो याश्च याश्च कुदृष्टयः।
सर्वास्ताः निष्फलाः प्रेत्य तमो निष्ठा हि ताः स्मृताः॥
(मनु० अध्या. १२, श्लो. ९५)

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।
यस्तर्केणानुसधत्ते स धर्मं वेद नेतरः॥
(मनु० अध्या. १२, श्लो, १०६)

व्याख्या— द्वौ आदेशौ क्रियेते। प्रथमः उपदेशः यत् वेदबाह्याः स्मृतयः सर्वथा त्याज्याः वेदस्य स्वतः प्रमाणत्वात्। अनेन सिद्धयति यत् बहवः स्मृतयः वेदबाह्याः भवितुं अर्हन्ति। अद्य पण्डिताः भगवतः वेदान् न जानन्ति अत एव तेषां कृते सर्वाः

स्मृतय निर्भ्रान्ताः सन्ति वेदवाक्यवत्। धर्मे अथ अयं दोष ,अनेन अस्माकं इयं दुर्दशा। द्वितीय उपदेश अयं एव सर्वं तर्केण विचारणीयम्। यदि तर्केण कश्चित् धर्मः न प्रतीयते, वेदसम्मत. न जायते, तदा स धर्मः न अस्ति अत एव त्याज्य.। अथ तर्काय तु स्थानं न दीयते। एवमेव व्याकरणे अपि कल्पनीयम्। तर्केण यत् यत् आवश्यकं स्यात् तत् तत् एव रक्षणीयं यत् यत् अनावश्यकं स्यात् तत् तत् त्याज्यम्। धर्मोन्नति भाषोन्नति. अनेन मार्गेण भवितु अर्हति। ईश्वरेण बुद्धि प्रदत्ता सम्यक् विचाराय अन्यथा मनुष्यस्य बुद्धेः किं प्रयोजनं कः लाभ ? अत एव सर्वं सम्यक् विचार्य ग्राह्यं अग्राह्यं वा।

प्रातिपदिकरूपेषु ( एकवचने केवलम् ) शब्दप्रयोगेण महान् लाभ भवितुं अर्हति। अन्यासु सर्वासु भाषासु प्राय सर्वे शब्दा. विसर्गरहिता. विद्यन्ते विशेषतया नाम-स्थान-संज्ञाः यथा रुजवेल्ट, चर्चिल, हिटलर, स्टेलिन, जवाहरलाल, पटेल, लण्डन, न्यूयार्क, बर्लिन, पैरिस, बनारस इत्यादीनि नामानि। एतेषां विशेषनाम-स्थान-संज्ञानां बहुवचनं अपि भवितु न अर्हति। संस्कृते कृत्रिमोपायकारणात् ( सर्वेषु शब्देषु 'सुप्' प्रत्ययः लगिष्यति, प्रातिपदिकरूपे एतेषां शब्दानां प्रयोगः न भवितु अर्हति ) वय कथयिष्यामः 'रुजवेल्ट., चर्चिल, हिटलरः, स्टेलिन, जवाहरलाल, पटेल, लण्डन, न्यूयार्कः, बर्लिनः, पैरिसः, बनारस,' इत्यादीनि नामानि। अत्र विचारणीयं यत् नाम अस्ति 'रुजवेल्ट' पर संस्कृते कथ्यते 'रुजवेल्ट,' अथवा रूजवेल्टः ( 'ज' वर्णं संस्कृतवर्णमालायां न विद्यते )

एवमेव अन्यस्थलेषु अपि कल्पनीयम्। 'जवाहरलाल' इति नाम अस्ति, संस्कृतज्ञा अपि 'जवाहरलाल' इति वदन्ति परं

संस्कृतभाषायां कथ्यते 'जवाहरलालः' तथा 'जवाहरलालो' अपि सन्धिकरणे यथा 'जवाहरलालो गच्छति'। हास्यास्पदं इदं सर्वम्। संस्कृतज्ञाः स्वयं स्वसन्ततीनां नामानि विसर्गरहितानि रक्षन्ति यथा 'श्यामलाल' 'रामलाल' 'गिरिधरगोपाल' इत्यादीनि नामानि। अनेन सिद्धयति यत् प्रातिपदिकेषु अर्थात् अर्थवच्छन्देषु एकवचने 'सुप्' विभक्तिदानं एकः कृत्रिमोपायः। प्रातिपदिकानि सर्वाणि एकवचने भवन्ति, भवितुं अर्हन्ति एव अतएव तानि सर्वाणि स्वरूपे तिष्ठन्तु। अनेन संस्कृते अपि स्वाभाविकता आगमिष्यति यथा संसारस्य सर्वासु भाषासु विद्यते। 'संस्कृतं' एका निर्मिता भाषा कृत्रिमोपायैः, अत एव यथासाध्यं कृत्रिमोपायाः दूरीकरणीयाः, परं तस्य आधाराः न विनाशनीयाः। संस्कृतस्य आधारः तु वेदभाषा, वेदवाणी वा अस्ति। स आधारः न नश्येत् अयं सदा एव स्मरणीयः। अस्माभिः इदं कार्यं एव क्रियते। वारं वारं कथितं अस्माभिः यत् कृत्रिमता, काठिनता, जटिलतेत्यादि-दोषाणां दूरीकरणे, वयं संस्कृतस्य आधारस्य नाशं न कामयामहे। अस्माकं सद्भावस्य सदुद्देश्यस्य शुभेच्छायाः इदं एव एकं प्रमाणम्। अत एव संशोधनानि संस्कृत-रक्षणाय एव करणीयानि।

(२) द्वितीयः उपायः संस्कृतस्य कृत्रिमता, काठिनतेत्यादि दूरीकरणाय अस्ति यत् दशलकारेषु केवलं चतुर्लकाराः तिष्ठेयुः, अद्यतन-अनद्यतन भेदं दूरीकृत्य। अयं कृत्रिमभेदः तु स्थातुं न शक्नोति, यदि संस्कृतज्ञाः इच्छन्ति यत् संस्कृतं राष्ट्रभाषा विश्व-भाषा च भवेत् पूर्ववत्।

(३) तृतीयः उपायः अयं यत् संज्ञासु एवमेव क्रियासु द्विवचनं निस्सारणीयम्। वचनेषु कृत्रिमवचनं इदं अर्थात् द्विवचनं यथा

लकारेषु अद्यतन-अनद्यतन कृत्रिमभेदं अवलम्ब्य लकाराणां विभागः।

## संस्कृतराजभवनम्।

सर्वैः विचारशीलपुरुषैः मन्यते अद्य यत् संस्कृतं जीर्णं कठिनं सञ्जातम्। तस्मिन् पुन प्राणप्रतिष्ठा आवश्यकी संजाता अस्ति। संस्कृतस्य आधारः तु दृढतमः, परं यत्र तत्र भवनस्य भागाः कालाघातेन दास्यताघातेन, स्वमूर्खताघातेन भग्नाः नष्टाः वा जाताः सन्ति, तेषां दृढीकरणं नवनिर्माणं वा आवश्यकम्। संस्कृतस्य आधारः तु वेदवाणी। यावत् अयं लोकः स्थास्यति, यावत् इदं ब्रह्माण्डं स्थास्यति तावत् अयं आधारः अपि स्थास्यति। वेदनाश वेदभाषानाशः भवितुं न अर्हति। द्वयोः रक्षका देवता सर्वोपरि ईश्वरः। अत एव आधारकारणात् संस्कृतं अपि 'अमरम्'। तत् मृतप्रायं भवेत् परं मर्तुं न शक्नोति। संस्कृतं अद्य भारतवर्षे जीवितभाषासु न अस्ति अर्थात् तत् अस्य देशस्य कस्मिंश्चित् अपि भागे भाषणभाषा न अस्ति, व्यवहारभाषा न अस्ति।

संस्कृतस्य एकः वेदभाषाधारः तु दृढतम। अद्य त्रयः नवीना-धाराः दीयन्ते, येन संस्कृतभवनं दृढतमं सर्वकालीनं च भवेत्। इमे त्रयः आधाराः तु अद्य एव घोषणीयाः व्यवहरणीया च। इमे सन्ति—

(१) 'असंहिता-वाक्यं'।

(२) 'चतुर्लकाराः'।

(३) 'द्विवचननिस्मारणम्'।

एतेषां सर्वेषां पूर्णरूपेण व्याख्या कृता अस्माभिः। भूयः व्याख्यायाः काचित् आवश्यकता न अस्ति। अस्माकं तु विश्वासः

अस्ति यत् भारतीय विदुषां घोषणामात्रेण व्यवहारेण च संस्कृतं अद्य भाषणभाषा राष्ट्रभाषा च भवितुं अर्हति। संस्कृतव्यवहारे पठनपाठने च संस्कृत-काठिन्यं एव एका महती बाधा। तस्याः दूरीकरणे संस्कृतं स्वत एव राष्ट्रभाषा भविष्यति। संस्कृत-भाषायां भारतीयानां विदेशीयानां च महती श्रद्धा, पूज्यभावः च। अत एव तस्याः राष्ट्रभाषात्वे विलम्बः न भविष्यति। पञ्च वर्षे तु संस्कृतं राष्ट्रभाषा भविष्यति एव यदि इमानि आवश्यकसंशो-धनानि विद्वद्भिः स्वीकृतानि।

## अन्तिमः सुधारः।

अन्तिमः सुधारः 'विसर्गादर्शनम्' संस्कृतभाषायां २५ वर्षा-नन्तरं आगन्तुं शक्नोति। कारणं इदं अस्ति यत् अस्य सुधारस्य स्वीकरणे संस्कृतव्याकरणे कश्चित् विशेषसुधारः आवश्यकः भविष्यति। विद्वांसः इदं कार्य्यं अपि कर्तुं शक्नुवन्ति, परं अस्मिन् दीर्घकालः लगितुं शक्नोति। इदानीं संज्ञासु क्रियासु विसर्गः तिष्ठेत् यथा विद्यते। अस्मिन् विषये एकांशे सुधारः भवितुं अर्हति। विशेषनाम-स्थानसंज्ञासु विसर्गलोपं मन्येत येन विशेषपुरुष-विशेषस्थान नाम्नां उच्चारणं तेषां पठनपाठनं। वा सम्यग्रूपेण भवेत्। तेषां सर्वेषां प्रातिपदिकरूपे प्रयोगः कार्य्यः। अस्मिन् सम्बन्धे अनेकानि उदाहरणानि दत्तानि अस्माभिः।

यथा जवाहरलाल, स्टोलिन, पटेल-इत्यादीनि नामानि विद्यन्ते तदा तेषां उच्चारणं स्वरूपे भवेत्। अस्माकं अयं आशयः। एनमेव विशेषस्थानवाचकसंज्ञानां विषये अपि करणीयम् यथा बनारस, प्रयाग, उन्नावेत्यादिनामानि। यत्र 'बनारस' नाम विद्यते तत्र 'बनारसः' इति कथनं अनावश्यकम्। 'बनारस'

शब्दे विसर्गस्थाने कृत्रिमता आगच्छति या सुस्पष्टा अस्ति। वस्तुतः यथा नाम तथा उच्चारणं भवेत्। अनेन सुधारेण संस्कृत-भाषाया. अयं दोषः कृत्रिमता वा दूरीभवितुं अर्हति। वयं कामयामहे यत् संस्कृते कश्चित् दीर्घसुधार. शनैः शनैः आगच्छेत् क्रियेत वा येन प्राचीनसंस्कृतेन ' प्रचलित- संस्कृतेन वा सहसा सम्बन्धविच्छेदः न स्यात्। अत एव 'संस्कृत-भाषायां अयं सुधारः २५ वर्षानन्तरं क्रियेत । वयं विचारयाम. यत् अयं सुधारः स्वत एव एतावत्कालानन्तरं आगमिष्यति। विपरीत न भवितु अर्हति । इयं अस्ति अस्माकं अन्तिमा भविष्यवाणी या ईश्वरकृपया प्रेरणया च मिथ्या भवितु न अर्हति।

अन्ते वयं वारं वार प्रार्थयामहे यत् ईश्वरः यः " पूर्वेषामपि गुरु कालेनानवच्छेदात् " अस्मभ्यं सर्वेभ्यः संस्कृतज्ञेभ्यः शक्तिं प्रदद्यात् येन वयं वेदे देववाण्याः लोके अमरभारत्याः सात्सेवां कर्तुं शक्नुवाम, दुराग्रहं ' मिथ्या गर्वं च ' विहाय। एवमस्तु। ओ३म् शम्।

